दिक्कन्याभिः पवनचमरै(१)र्व क्षिप्रं क्षपा क्षीयते
र्भिक्षुः शा[illegible] [illegible] स विहरिणामुत्क्लेद(१)संतापकृत् ।
[illegible]र्के न च वल्लभा न विरहस्तेनोभयभ्रंशिना-
[illegible]दू राजति दर्पणाकृतिरयं नोष्णो न वा शीतलः॥२०॥
भोजराजचोरकविकृतम् पद्यम् ॥

दैन्यं क्वचित्क्वचन मन्मथजा विकाराः
कुत्राप्यनेकविधबन्धुजनप्रपञ्चः ।
क्वापि प्रभूतधनकल्पितमीश्वरत्व-
मित्येकवैकृतमिदं जगदाविभाति ॥ २१ ॥
श्रीवत्सराजदेवानाम् ॥

गतास्तातभ्रातृप्रमुखमुखपीयूषमधुराः
पुरा लक्ष्मीक्लैव्यव्यसनसरसास्तेऽपि दिवसाः ।
अदः श्रान्तं स्वान्तं सपदि यदि निर्वेदपदवीं
भजत्यभ्यासोऽयं जनयति सुखं भावि(२)विमुखम् ॥२२॥
श्रीराघवदेवदेवानाम् ( ३ ) ॥

धावन्तः प्रतिवासरं दिशि दिशि प्रत्याशया संपदां
दृष्ट्वा कालवशेन हन्त फलितं कस्यापि दैवद्रुमं ।
श्रावं श्रावमवज्ञयोपहसितं सर्वत्र भग्नोद्यमा
जीवामः परमार्थशून्यहृदयास्तृष्णा नभोमोदकैः ॥२३॥
श्रीदामोदरदेवानाम् ॥

( १ ) मुक्तेव इति पाठा० ॥
( २ ) भाव इति पाठा० ॥
( ३ ) राघवदेवानाम् इति पाठा० ॥

सन्त्येके धनलाभमात्रगहनव्यामोहसंमूर्छिताः
केचिद्दैवतसुन्दरीस्तनपरीरम्भभ्रमव्याकुलाः ।
अन्तर्भूतसमस्ततत्त्वनिवहं चिन्मात्रशेषं शिवं
दृष्ट्वा हृष्टतनूरुहाङ्कुरभराः कष्टं न शिष्टाः क्वचित् ॥२४॥

श्रीदेवदासदेवानाम् ॥

(देवदासो देवगणः) (१)

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे वैराग्याख्यान-परिच्छेदः ॥

---

## अथ अनित्यतानिरूपणम् ॥

येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयौ ।
तादृशः(२) पुरुषा याता मादृशां गणनैव का ॥१॥

वासिष्ठरामायणात्

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं(३) पदं शिरसि विद्विषतां ततः किम्
संमानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ २

(१) पि० पु० नास्ति ॥ (२) तादृशा इति पाठः ॥
(३) न्यस्तं इति पाठः ॥

वयं येभ्यो जाताश्चिरतरगता एव खलु ते
समानं यैर्वृद्धाः(१) स्मरणपदवीं तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतना
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं(२) न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये ।
किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः॥४॥

एते भर्तृहरेः ॥

न्यस्तं यथा मूर्द्धि मुदात्ति मेषो
दूर्वाक्षताद्यं बलिकल्पितः सन् ।
मृत्युं समीपस्थितमप्यजान-
न्भुनक्ति मर्त्यो विषयांस्तथैव ॥ ५ ॥

कस्यापि ॥

अहमिह कृतविद्यो वेदिता सत्कलानां
धनपतिरहमेको रूपलावण्ययुक्तः ।
इति कृतगुणगर्व्वः खिद्यते किं जनोऽयं
कतिपयदिनमध्ये सर्वमेतन्न किंचित् ॥ ६ ॥

श्रीदामोदरदेवानाम् ॥

(१) समं यैः संवृद्धाः इति पाठा० ॥
(२) 'श्रव्यं' इति पाठा० ॥

गलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि ।
मां जीवितनिबद्धास्थं विहसिष्यन्ति साधवः ॥ ७ ॥
संसाररात्रिदुःस्वप्ने शून्ये देहमयभ्रमे ।
आस्थां चेदनुबध्नामि तन्मूर्खो नास्ति मत्परः ॥ ८ ॥
एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः ।
स्वप्न एष महाबुद्धे दिनानि त्रीणि पञ्च वा(१)॥ ९ ॥
येषु येषु दृढ़ा बद्धा(२) भावना मिष्ट(३)वस्तुषु ।
तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥१०॥
यन्मध्ये यच्च पर्य्यन्ते यदापाते मनोरमम् ।
सर्वमेवापवित्रं तद्विण्मज्जा(४)मेध्यदूषितम् ॥ ११ ॥
नीलोत्पलानि नयनानि(५) परमप्रेम भूषणम् ।
हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥१२॥
एते वासिष्ठात् ॥

गन्धर्वनगराकारः संसारः क्षणभङ्गुरः ।
मनसो वासनैवेयमुभयोर्भेदसाधनम् ॥ १३ ॥

नन्दन्ति मन्दाः श्रियमाप्य नित्यं
परं विषीदन्ति विपद्गृहीताः ।
विवेकदृष्टया चरतां नराणां
श्रियो न किंचिद्विपदो न किंचित् ॥ १४ ॥

(१) च इति पाठा० ॥ (२) भावा इति पाठा० ॥
(३) दृष्ट इति पाठा० ॥ (४) विनाशा इति पाठा० ॥
(५) नीलोत्पलाभनयनाः इति पाठा० ॥

मित्रं कलत्रममितः परिवारलोको
भोगैकसाधनमिमाः किल संपदो नः ।
एकः क्षणः स तु भविष्यति यत्र भूयो
नायं न यूयमितराश्च(१) वयं न चैते ॥ १५ ॥

गतेनापि न संबन्धो न सुखेन भविष्यता ।
वर्त्तमानं क्षणातीतं संगतिः कस्य केन(२) वा ॥१६ ॥
एते श्रीदेवगणदेवानाम् ॥

इतो न किंचित्परतो न किंचि-
द्यतो यतो यामि ततो न किंचित् ।
विचार्य्यमाणं हि (३)जगन्न किंचित्
स्वात्मावबोधादपरं न किंचित् (४) ॥१७॥
कस्यापि ॥

यदस्माभिर्दृष्टं क्षणिकमभवत्स्वप्नमिव(५) तत्
कियन्तो भावास्तु स्मरणविषयादप्यपगताः ।
अहो पश्यत्पश्यत्स्वजनमखिलं यान्तमनिशं
हतव्रीडं चेतस्तदपि न भवेत्सङ्गरहितम् ॥ १८ ॥
श्रीशिवदासदेवानाम् ॥

(१) मितरे न इति पाठा० ॥
(२) पिट० पु० केन कस्यइति विपर्ययो वर्त्त० ॥
(३) विचार्यमाणोऽपि इति पाठा०
(४) पिट० पु० पाठव्यत्ययः ॥
(५) स्वप्न इव इति पाठा० ॥

साक्षात्प्रेमावतारः कमलदलदृशो दिक्षु लक्ष्मीरनन्ता
सत्पुत्राः सन्ततिस्त्राः समविपदविपत्संविभागी कुटुम्बः ।
एतत्सर्वं हि तावत् सुकृतविलसितं दृश्यमानं मनोज्ञं
यच्चैतत्तित्प्रनाश(१)प्रणयि बत मनाङ् म्लायते तेन चेतः॥१९॥

हरिगणस्य

चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः
संमीलिते तु नयने न च(२) किंचिदस्ति ॥२०

भोजराज्ञो वाक्यम् (३)

पृथिवी दह्यते यत्र मेरुश्चापि विशीर्य्यते ।
सुशोषं सागरजलं शरीरे तत्र का कथा ॥ २१ ॥
इदं युगसहस्रस्य भविष्यदभवद्दिनम् ।
तदप्यद्यत्वमापन्नं का कथा मरणावधेः ॥ २२ ॥
लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया ।
न सन्ति खलु तावत्यो गङ्गायामपि वालुकाः ॥ २३
आसन्नतामेति मृत्युरायुर्याति दिने दिने ।
आघातं नीयमानस्य बध्यस्येव पदे पदे ॥ २४ ॥

केषामप्येते

( १ ) यावच्चैतत्प्रणाश इति पाठा० ॥
( २ ) संमीलने नयनयोर्न हि इति पाठा० ॥
( ३ ) पि० पु० अत्र कस्यापि इति वर्त्त० ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २५ ॥
एकसार्द्ध(१) प्रवृत्तानां सर्व्वेषां तत्र गामिनाम् ।
यद्येकस्त्वरितो याति तत्र का(२)परिदेवना ॥ २६ ॥
एतौ भगवतो व्यासस्य ॥

एकेऽद्य प्रातरपरे पश्चादन्ये पुनः परे ।
सर्वे निःसीम्नि संसारे यान्ति कः केन शोचयते ॥२७॥
क्षेमेन्द्रस्य ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे अनित्यतानिरूपण-परिच्छेदः ॥

---

## अथ विषयोपहासाः (३) ॥

नित्यमाचरतः शौचं कुर्व्वतः पितृतर्पणम् ।
यस्य नोद्विजते चेतः शास्त्रं तस्य करोति किम् ॥ १ ॥
कस्यापि ॥

यावतः कुरुते जन्तुः स्वसुखार्थं परिग्रहान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः॥ २ ॥

(१) सार्थं इति पाठः ॥
(२) पि० पु० का तत्र इति विपर्ययः ॥
(३) अथ विषयोपहासः इति पाठान्तरम् ॥

दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः ।
कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥३॥ (१)

क्रिमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी ।
स कायः परतापाय युज्यतामिति को नयः ॥ ४ ॥

कस्यापि

रक्तमांसमयः कायः स्त्रीणां स्पर्शसुखाय नः ।
तमेवाश्नन्ति सिंहाद्या रम्यं नास्तीह वस्तुतः ॥ ५ ॥

अङ्गमङ्गेन संपीड्य मांसं मांसेन तु स्त्रियाः ।
पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम् ॥ ६ ॥

एतौ वासिष्ठात्

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः कस्य जायते ॥७॥

कस्यापि

दृष्ट्वैव विकृतं कायं वायुस्पन्दविवर्जितम् ।
येषु निर्व्याजमासक्तास्तेभ्योऽपि बिभिमो वयम् ॥ ८

श्रीदेवगणदेवानाम्

श्वेतं पदं समभिवीक्ष्य शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चण्डालकूपमिव दूरतरं तरुण्यः ॥ ९ ॥

(१) पिट० पु० कस्यापि इत्यधि वर्त्त० ॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनं
मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम्॥ १० ॥

एतौ भर्तृहरेः ॥

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्त्तः संशालीन्(१)कवलयति शाकादि(२) कलितान् ।
प्रदीप्ते कामाग्नौ दृढ़तर स(३)माश्लिष्यति वधूं
प्रतीकारे(४) व्याधेः सुखमिति विपर्यस्यति जनः ॥ ११॥

भर्तृहरेः (५) ॥

# इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरससमये विषयोपहास-परिच्छेदः ॥३॥

(१) सञ्शालीन् इति पाठान्तरम् ॥
(२) मांसाज्य इति पाठान्तरम् ।।
(३) सुदृढ़तर इति पाठान्तरम् ॥
(४) प्रतीकारं इति पाठान्तरम् ।।
(५) पि॰ पु॰ अत्र कस्यापि इति वर्त्त॰ ॥

## अथ पश्चात्तापः ॥

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भदर्प(१)दलनैर्नाकं न नीतं यशः
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ २ ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्द्धर्म्मोऽपि नोपार्ज्जितः
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥३॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढ़ा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्न्निशं नियमितः(२) प्राणैर्न्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितः (३)॥४॥

जातः कूर्म्मः स एकः पृथुभुवनभरायार्प्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।

(१) पीठ इति पाठा०॥ (२) नियमित इति निर्विसर्गपाठा० ॥
(३) वञ्चिताः इति पाठा० ॥

संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न वाधो (१)
ब्रह्माण्डोदुम्बरान्तर्म्मशकवदपरे जन्तवो जातनष्टाः ॥५॥

धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीड़ाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥६॥

अजानन्माहात्म्यं पतति शलभस्तीव्रदहने
न मीनोऽपि ज्ञात्वा वृतवड़िश(२)मश्नाति पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिला
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ७ ॥

एते भर्तृहरेः ॥

तरत्तरल(३)तृष्णेन किमिवास्मिन् धरातले ।
मया न कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥ ८ ॥

वासिष्ठात् ॥

मन्त्रोद्भावितदैवतैर्न्न विधिवद्दासीकृताः सिद्धयो
योगाभ्याससमाहितैरनुदिनं तीर्णो न मोहार्णवः ।
तुभ्यत्क्षुद्रनरेन्द्रदत्तविगलत्संपल्लवो(४)ल्लासितै-
र्धिग्मूढ़ैरिव पण्डितैरपि बलात्कालः कथं नीयते ॥९॥

(१) वाधो इति पाठा० ॥
(२) बडिशायुत इति पाठा० ॥
(३) चलत्तरल इति पाठा० ॥
(४) ल्लवो इति पाठा० ॥

ध्यानेनापि(१) समाहितेन मनसा दूरे शिरो नामितं
भूपानां प्रतिशब्दकैरिव चिरं प्रोद्‌घुष्टमिष्टं वचः।
द्वाराध्यक्षनियन्त्रणापरिभवप्रम्लानवक्त्रैः स्थितं
भ्रातः किं करवाम मुञ्चति मनो नाद्याप्यविद्याग्रहम् ॥१०॥
एतौ श्रीदेवगणदेवानाम् ॥

यातं यौवनमधुना वनमधुना शरणमेव(२)मस्माकम् ।
स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ ११ ॥

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता
दृष्टिर्भ्रश्यति(३) रूपमेव ह्रसते वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
हा कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥१२॥

नो धर्माय यतो न तत्त्व(४)निरता नार्थाय येनेदृशाः
कामोऽप्यर्थवतां तदर्थमपि नो मोक्षः क्वचित्कस्यचित्।
तत्केनाम वयं वृथैव घटिता ज्ञातं पुनः कारणं
जीवन्तोऽपि मृता इति प्रवदतां शब्दार्थसंसिद्धये॥१३
केषामप्येते ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे पश्चात्ताप-परिच्छेदः ॥४॥

(१) ध्यावित्वा सु इति पाठा० ॥
(२) मेक इति पाठा० ॥
(३) नश्यति इति पाठा० ॥
(४) तत्त्व इति पाठा० ॥

## अथ कालचरितम् ॥

पुरन्दरसहस्राणि चक्रवर्तिशतानि च ।
निर्व्वापितानि कालेन प्रदीपा इव वायुना ॥ १ ॥
कस्यापि (१) ॥

भ्रातः कष्टमहो महानरपतिः(२) सामन्तचक्रं च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रविम्बाननाः ।
उद्रिक्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥२॥

प्राप्ता जरा यौवनमप्यतीतं
बुधा यतध्वं परमार्थसिद्धैय ।
आयुर्गतप्राण(३)मिदं यतोऽसौ
विश्रम्य विश्रम्य न याति कालः ॥ ३ ॥
एतौ भर्तृहरेः ॥

कांश्चित्कल्पशतं कृतस्थित(४)चयान्कांश्चिद्युगानां शतं
कांश्चिद्वर्षशतं तथा कतिपयाञ्जन्तून् दिनानां शतम् ।
तांस्तान्कर्मभिरात्मनः प्रतिदिनं संक्षीयमाणायुषः
कालोऽयं कवलीकरोति सकलान् भ्रातः कुतः कौशलम्॥४॥

(१) पि० पु० कस्यापि इति नास्ति ॥
(२) महान्स नृपतिः इति पाठ० ॥
(३) प्राय इति पाठ० ॥
(४) स्थिति इति पाठ० ॥

कालेन क्षितिवारिवह्निपवनव्योमादियुक्तं जगद्
ब्रह्माद्याश्च सुराः प्रयान्ति विलयं विद्मो विचारादिति ।
पश्यामोऽपि विनश्यतोऽनवरतं लोकाननेकान्मुधा
मायामोहमयीं भवप्रणयिनीं नास्थां जहीमो वयम् ॥५॥

एतौ शार्ङ्गधरस्य ॥

अद्यैव हसितं गीतं पठितं यैः शरीरिभिः ।
अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ ६ ॥

कस्यापि ॥

म्रियमाणं मृतं बन्धुं शोचन्ति परिदेवनैः ।
आत्मानं नानुशोचन्ति कालेन कवलीकृतम् ॥ ७ ॥

श्रीदेवगणदेवानाम् ।

आराध्य भूपतिमवाप्य ततो धनानि
भोक्ष्यामहे(१) वयमिह प्रसभं सुखानि ।
इत्याशया बत विमोहितमानसानां
कालो जगाम मरणावधिरेव पुंसाम् ॥ ८ ॥

कस्यापि ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे कालचरित-परिच्छेदः ॥५॥

(१) भुञ्जामहे इति पाठान्तरम् ।

# अथ विचारः (१) ॥

यस्मिन् वस्तुनि ममता (२)तापस्तत्रैव तत्रैव ।
यत्रैवाहमुदासे तत्रैवाहं (३)स्वभावसंतुष्टः ॥ १ ॥

कस्यापि (४) ॥

मुण्डी जटी वल्कलवांस्त्रिदण्डी
कषायवासा व्रतकर्शिताङ्गः ।
त्यक्तैहिको वा यदि नाप्ततत्त्व-
स्तदा हतस्यो(५)भयमेव नष्टम् ॥ २ ॥

कस्यापि ॥

मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति नो यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ ३ ॥

अधीत्य चतुरो वेदान् व्याकरणाष्टा(६)दशस्मृतीः ।
अहो श्रमस्य वैफल्यमात्मापि कलितो न चेत् ॥ ४ ॥

एतौ हरिगणस्य (७) ॥

(१) विवेक इति पाठ० ॥
(२) ममता मम इति पाठ०
(३) तत्र मुदासे इति पाठ० ॥
(४) पि० पु० कस्यापि इति नास्ति ॥
(५) तु तस्यो इति पाठ० ॥
(६) व्याकृत्याष्टा इति पाठ० ॥
(७) पि० पु० मृत्योरित्यादि श्लोकम् प्रथमम्पठित्वा तं च कस्यापीत्युल्लिख्य तदनु मुण्डीत्यादिं ततश्च अधीत्येत्यादिं श्लोकम्पठित्वा एतौ हरिगणस्येत्युल्लिखितमस्ति ॥

मूर्खास्त(१)पोभिः कृश(२)यन्ति देहं
बुधा मनो देह(३)विशुद्धि(४)हेतुः (५)।
श्वा मुक्तमस्त्रं दशतीति कोपात्
क्षेप्तारमस्त्रस्य निहन्ति (६)सिंहः ॥ ५ ॥

कस्यापि ॥

बालिकारचितवस्त्रपुत्रिका-
क्रीड़नेन सदृशं सुरार्चनम्।
यत्र शाम्यति मनो न निश्चलं
स्फीतचिज्जलधिमज्जनामलम् (७) ॥ ६ ॥

कस्यापि ।

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम्।
यद्यप्ये(८)वं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ॥७

(१) जड़ास्त इति पाठा०
(२) शम इति पाठा० ॥
(३) मनश्चापि इति पाठा० ॥
(४) विकार इति पाठा० ।
(५) हेतुम् इति पाठा० ।
(६) मुद्दिश्य हिनस्ति इति पाठा० ॥
(७) पि० पु० एष श्लो० ना० ।
(८) यद्यस्त्येवम् इति पाठा० ॥

यदा किंचिज्ज्ञोऽहं गज (१)इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित् किंचिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥८॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थे(२) प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥९॥

एते भर्तृहरेः ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे विचार-परिच्छेदः ॥६॥

---

## अथ उपदेशः ॥

(३)
स वेदो निर्वेदः स्मृतिरपि च सा विस्मृतिरहो
स शास्त्रार्थो व्यर्थस्तदपि यजनं मोहभजनम् । (४)

---

(१) द्विप इति पाठा ॥

(२) व्यर्थम् इति पाठा० ॥

(३) पिट० पु० द्रविणस्पृहया दुरीश्वराणां भरवित्तर्द्धिं विशेषणं भजन्त:। अपुनर्भवसाधनं शरीरं क्षपयामो वयमोन्नमः शिवाय इत्येष श्लो० अधि० वर्त्त० ॥

(४) जननम् इति पाठा० ।

स ऊहः प्रत्यूहो हरिहरकथा सा च विकथा(१)
न यत्र स्यादात्मा स्फुरदनुभवप्रत्ययमयः ॥१॥
कस्यापि ।

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्म्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवभारदुःखरचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रकाशकलनं शेषा वणिग्वृत्तयः(२)॥२॥

कुले महति जातेन आत्मनः श्रेय इच्छता ।
आत्मज्ञाने श्रमः कार्यो यं ज्ञात्वा(३)मृतमश्नुते ॥३॥
पुंप्रकृत्योः कथामेव शिवशक्त्योस्तथैव च ।
यः शृणोति नरो भक्त्या निष्पापः सोऽपि जायते ॥४॥
स गुणी स च धर्म्मिष्ठः स विवेकी स बुद्धिमान् ।
ब्रह्मज्ञाने मतिर्यस्य शेषाः पशुसमा नराः ॥ ५ ॥
ग्रामे गोऽश्वखरोष्ट्राद्या अरण्ये हरिणादयः ।
यथैते पशवो मूढास्तथात्मानं न वेत्ति यः ॥ ६ ॥
सर्वेषां तु पदार्थानामभ्यासः कारणं परम् ।
अनभ्यासेन मर्त्यस्य प्राप्तो योगोऽपि नश्यति ॥ ७
अभ्यासेन स्थिरं चित्तमभ्यासेनानिलो वशः(४) ।
अभ्यासेन परानन्दो अ(५)भ्यासेनात्मदर्शनम् ॥ ८

(१) वितथा इति पाठा० ॥
(२) अयं श्लोकः पि८० पुस्तके नास्ति ॥
(३) यज्ज्ञात्वा इति पाठान्तरम् ॥
(४) नानिलच्युतिः इति पाठान्तरम् ॥
(५) ह्य इति पाठा० ।

अभ्यासेनान्यसञ्चारो अ(१)भ्यासेनान्यरूपता ।
अभ्यासेन समुत्क्रान्तिरभ्यासेनाणिमादयः ॥ ९ ॥
श्रुत्वापि यदनभ्यासो लौल्यं निद्रा जने रतिः ।
विरुद्धशास्त्रश्रवणमेतद्योगविनाशनम् ॥ १० ॥
असत्सङ्गाद् गुणज्ञोऽपि विषयासक्तमानसः ।
अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥ ११ ॥
विषयेष्वपि कष्टोऽयं विषय(२)स्त्रीति नाम यः(३) ।
जीवत्यन्यैः किलाकृष्टः स्त्रियाकृष्टो न जीवति ॥१२॥
स्त्रीरत्नध्यानमात्रं तु ब्रह्मणोऽपि मनो हरेत् ।
किं पुनश्चेतरेषां तु विषयेच्छानुवर्तिनाम् ॥ १३ ॥
स्त्रीरत्न(४)मोहनं दृष्टं(५) स्पृष्ट(६)माशीविषोपमम् ।
यदीच्छेदात्मनः श्रेयो मनसापि न चिन्तयेत् ॥ १४ ॥

एते योगरसायनात् ॥

संसार तव निस्सार(७) पदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ १५ ॥

कस्यापि ॥

(१) ह्य इति पाठा० ।
(२) विषयः इति सविसर्गम् पाठा० ।
(३) नामतः इति पाठा० ।
(४) रत्नम् इति पा० ।
(५) स्पृष्टं इति पाठान्तरम् ॥
(६) दृष्ट इति पाठान्तरम् ॥
(७) दुष्पार इति पाठान्तरम् ॥

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ १६
कामः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते ।
मुमुक्षाम् प्रति कर्त्तव्यः स वै (१)तस्यापि भेषजम् ॥१७॥
एतौ मार्कण्डेयपुराणात् ।
मोक्षद्वारे प्रतीहाराश्चत्वारः परिकीर्तिताः ।
शमो विवेकः संतोषश्चतुर्थः साधुसंगमः ॥१८॥
वासना द्विविधा प्रोक्ता शुद्धातिमलिना तथा ।
शुद्धा जन्मक्षये हेतुर्मलिना जन्मकारणम् ॥ १९ ॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ २० ॥
न तदस्ति जगत्कोशे शुभे कर्मानुपातिना ।
यत्पौरुषेण शुद्धेन न समासाद्यते जनैः ॥ २१ ॥
शुभवासनया चेतो महत्या जायते महत् ।
आत्मानं चिन्तयन् रुद्रं नन्दी रुद्रत्वमागतः ॥ २
क्षुद्रवासनया चेतः क्षुद्रतामेति नित्यशः ।
पिशाचविभ्रमात्सुप्तः पिशाचान्निशि पश्यति ॥२३
मदातिशयसुप्तेन(२) विश्वामित्रेण विप्रता ।
भूयो भूयः प्रयुक्तेन दुःप्रापा(३) तपसार्ज्जिता ॥२

(१) सा च इति पाठा० ॥
(२) मदातिशययुक्तेन इति पाठा० ।
(३) दुष्प्रापा इति पाठा० ।

प्रणयेन यमं जित्वा कृत्वा वचनसङ्करम् ।
परलोकादुपानीतः सावित्र्या सत्यवान् पतिः ॥ २५॥
न सोऽस्त्यतिशयो लोके यस्यास्ति न फलोदयः ।
अतः कार्यः प्रयत्नस्तु सद्भिः शिवफलाप्तये ॥ २६ ॥
युक्त्या संतरतोऽज्ञस्य संसारो गोष्पदाकृतिः ।
दूरसंत्यक्तयुक्तेस्तु महागाधार्णवोपमः ॥ २७ ॥
सुसन्नद्धसमस्ताङ्गं प्रशमामृतवर्म्मणा ।
वेधयन्ति न दुःखानि शरा वज्रशिलामिव ॥ २८ ॥
पुंसो निजमनोमोहकल्पितानल्पदुःखदः ।
संसारचिरवैतालो(१) विचारेण वि(२)लीयते ॥ २९ ॥
विचारदर्प्पणे लग्नां धियं धैर्य्यधुरं गताम् ।
आधयो नैव लुम्पन्ति(३) वाताश्चित्रानलं यथा ॥३०॥
यथोदिते दिनकरे क्वापि याति तमस्विनी ।
तथा विवेकेऽभ्युदिते क्वाप्यविद्या विलीयते ॥ ३१ ॥
नाहं मांसं न चास्थीनि देहादन्यः परोऽप्यहम् ।
इति निश्चयवानन्तः क्षीणाविद्य इहोच्यते ॥ ३२ ॥
सर्वा दृष्टीः परित्यज्य नियम्य मनसा मनः ।
सबाह्याभ्यन्तरार्थस्य संकल्पस्य क्षयं कुरु ॥ ३३ ॥

(१) विषवेतालो इति पाठा० ।
(२) विचारेणैव इति पाठा० ।
(३) न विलुम्पन्ति इति पाठा० ॥

यदि वर्षसहस्राणि तपश्चरसि दारुणम् ।
तथापि ते न सिद्धिः स्यात् संकल्पोपशमादृते ॥३४॥
हरो यद्युपदेष्टा स्याद्धरिः कमलयोनि(१) वा ।
तथापि ते नैव मुक्तिः(२) संकल्पोपशमादृते ॥ ३५ ॥
संकल्पतन्तावखिला भावाः प्रोक्ताः(३) शुभाशुभाः ।
छिन्ने तन्तौ न जाने ते क्व यान्ति विशरारवः(४) ॥३६॥
शान्तसंदेहदौरात्म्यं गतकौतुकविभ्रमम् ।
परिपूर्णं चिरं(५) चेतः पूर्णेन्दुरिव राजते ॥ ३७ ॥
चेतश्चञ्चलया वृत्त्या चिन्तानिचयपञ्जरे ।
धृतिं(६) बध्नाति नैकत्र पञ्जरे केशरी यथा ॥ ३८ ॥
दृष्टमात्रेषु भावेषु यथा खलु(७) न रुद्यते (८) ।
तथैव तदनास्थातश्चिरं(९) चित्ते न रुद्यते (१०) ॥३९॥
घटात्पटमुपायाति पटाच्छकटमुत्कटम् (११) ।
चित्तमर्थेषु चरति पादपेष्विव मर्कटः ॥ ४० ॥

(१) कमलजोऽपि इति पाठ० ।
(२) ते न सिद्धिस्स्यात् इति पाठ० ॥
(३) प्रोताः इति पाठ० ।
(४) जायन्ते कल्पान्तेऽपि शरीरिणः इति पाठ० ।
(५) परिपूर्णान्तरम् इति पाठ० ।
(६) वृतिम् इति पाठ० ॥
(७) बत इति पाठान्तरम् ॥
(८) रुच्यते इति पाठ० ।
(९) तदनायन्तं चिरमिति पाठ० ॥
(१०) रुच्यते इति पाठ० ॥
(११) पटाद् घटमनुत्कटमिति पाठ० ॥

सफलो मांसदेहस्य न कश्चित्पौरुषक्रमः ।
मनो देहस्य सफलं सर्वमेव स्वचेष्टितम् ॥ ४१ ॥

मनोनिर्म्माण(१)मात्रेण जगन्नाम्ना महाधिना ।
त्यक्तेनार्थेन वार्थः(२) स्यात् करदस्य(३) महात्मनः ॥४२॥

मनोमात्रं जगत्सर्वं मनः पर्वतमण्डलं ।
मनो भूमिर्मनो व्योम(४) मनो वायुर्मनो जलम् ॥४३॥

कुसुमोल्लासिधम्मिला हेलावलितलोचना ।
काष्ठकुड्योपमाङ्गेषु लग्नाप्यमनसोऽङ्गना ॥ ४४ ॥

कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्म्मनसः क्षतिः ॥४५॥

शास्त्रसत्सङ्गधीरेण चिन्तातप्तमतापिना ।
छिन्द्धि त्वमयसेवायो मनसैव मनोऽधुना ॥ ४६ ॥

वासनावागुराकृष्टो मनोहरिणको नृणां ।
परां विवशतामेति संसारवनगुल्मके ॥ ४७ ॥

सततोदारवृत्तासु कथासु परिशीलितम् ।
सम्पन्नं(५) निर्म्मलं चेतो मोहपङ्कैर्न लिप्यते ॥ ४८ ॥

(१) निर्वाण इति पाठा० ।

(२) चान्तः इति पाठा० ॥

(३) स्याद् खदारो इति पाठा० ॥

(४) जीर्णो इति पाठा० ॥

(५) सम्पन्न इति निरनुस्वारं पाठा० ॥

तस्मात्प्रजागरः कार्यः प्रवृद्धेन(१) दिवानिशम् ।
न मुष्णन्ति च्छलाद्यस्मात् कामक्रोधादयोऽरयः॥४९॥

एते वासिष्ठात् ।

पुरमेकं जगत्यस्मिन्नस्ति मांसा(२)स्थिनिर्म्मितम् ।
चर्म्मभित्तिमहायामं सर्वतः स्नायुवेष्टितम् ॥ ५० ॥
नवद्वारं महाभूतैः पञ्चभिः सर्वतो वृतम् ।
नृपश्च पुरुषस्तत्र चेतनावानवस्थितः ॥ ५१ ॥
मन्त्रिणौ तस्य बुद्धिश्च मनश्चैव विरोधिनौ ।
यतेते तस्य नाशाय तावुभावितरेतरम् ॥ ५२ ॥
नृपस्य तस्य चत्वारो नाशमिच्छन्ति विद्विषः ।
कामः क्रोधस्तथा लोभो मोहश्चान्यो महारिपुः ॥५३॥
यदा तु स नृपः स्वानि(३) द्वाराण्यावृत्य तिष्ठति ।
तदा स्वस्थबलश्चैव निरातङ्कश्च जायते ॥ ५४ ॥

एते मार्कण्डेयपुराणात् ।

जयत्यविरतारम्भा नियतिः परमात्मनः ।
यद्वशादिदमाभोगि जगच्चक्रं प्रवर्त्तते ॥ ५५ ॥
यश्च सर्वात्मको देवः परं ब्रह्म महेश्वरः ।
स्वस्थः(४) स्वानुभवानन्दरूपोऽन्तादिवि (५)वर्जितः ॥५६॥

(१) प्रबुद्धेन इति पाठा० ॥
(२) त्रसृङ्मांसा इति पाठा० ॥
(३) नृपस्तानि इति पाठा० ।
(४) स्वच्छः इति पाठा० ॥
(५) रूपाकारादि इति पाठा० ।

एतस्मात्परमानन्दाच्छुद्धचिन्मात्ररूपिणः ।
जीवः स जायते(१) पूर्वं तस्माच्चित्तं ततो जगत् ॥ ५७ ॥
शान्तस्यापगतेच्छस्य मनाक् संवेदनात्मकम् ।
स्वाभाविकं यत्स्फुरणं चिद्व्योम्नः सोऽङ्ग जीवकः ॥ ५८ ॥
यथा वातस्य चलनं कृशानोरुष्णता यथा ।
शीतता वा तुषारस्य तथा जीवत्वमात्मनः ॥५९॥
जीवत्वाच्चित्तसाङ्गत्यं चित्तत्वादिन्द्रियादिता ।
इन्द्रियादेः शरीरत्वं शरीरात्कर्म्मसंचयः ॥ ६० ॥
कर्म्मणः संचयात्स्वर्गनरकौ मोक्षबन्धने ॥ ६० ॥
कर्म्मणो जायते जन्तुर्बीजादिव नवाङ्कुरः ।
जन्तोः प्रवर्तते कर्म्म पुनर्बीजमिवाङ्कुरात् ॥६१॥
आदिसर्गे हि नियतिर्भाववैचित्र्यमक्षयम् ।
अनेनेत्थं सदा भाव्यमिति संपद्यते परम् ॥ ६२ ॥
अनुत्कीर्णा(२) यथा पङ्के पुत्रिका चाथ(३) दारुणि ।
वर्णा यथा मषीकल्के तथा स्वर्गाः(४) स्थिताः परे ॥ ६३॥
कटकत्वं पृथग् हेम्नस्तरङ्गत्वं पृथग् जलात् ।
यथा न हि(५) भवत्येवं न जगत्पृथगीश्वरात् ॥ ६४ ॥

(१) संजायते इति पाठा० ॥
(२) अनुत्कीर्णा इति पाठा० ॥
(३) वाथ इति पाठा० ॥
(४) सर्गा इति पाठा० ॥
(५) न स इति पाठा० ॥

तप(६) एव यथा वारि मृगाणां भ्रमकारणम् ।
असत्यमेव सत्याभं तथा मूढ़मतेर्ज्जगत् ॥ ६५ ॥
न किंचित्केनचिद्व्याप्तं न च किंचित्क्वचित्स्थितम् ।
चिदाकाशमयं शान्तं सर्वमेतदभित्तिमत् ॥ ६६ ॥
मुधैवैते वयमहो ससुरासुरमानवाः ।
असत्या एव वल्गामो याम आयाम एव च ॥ ६७
अलीक एव तद्भावो मद्भावोऽलीक एव च ।
अनुभूतोऽप्यसद्रूपः स्वप्ने स्वमरणं यथा ॥ ६८ ॥
शरीरातीतवृत्तिस्त्वं शरीरस्थो भवाभवः ।
मा गाः शोकं च हर्षं च त्वमात्मा विगतज्वरः ॥ ६९ ॥
यथा रजोभिर्गगनं यथा कमलमम्बुभिः ।
न लिप्यतेऽतिसंश्लिष्टैर्द्देहैरात्मा तथैव सः ॥ ७० ॥
बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्ज्जितः ।
कर्त्ता बहिरकर्त्तान्तर्लोके विचर(६) राघव ॥ ७१ ॥
देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः ।
अजाड्यं संविन्मननं(१) तन्मयो भव राघव ॥ ७२ ॥
विविक्तः शान्तसंकल्पो धीरधीरुज्झिता(२)शयः ।
यथाप्राप्तानुवर्ती च लोके विचर(३) राघव ॥७३॥

(१) ताप इति पाठ० ॥
(२) विहर इति पाठा० ॥
(३) अजाड्यसंचिन्मननं इति पाठा० ॥
(४) रूर्जिता इति पाठा० ॥
(५) विहर इति पाठा० ॥

श्रूयतां ज्ञानसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
भोगेच्छा(१)मात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ॥१४॥
प्राप्य ज्ञानदशामेतां पशुस्नेच्छादयोऽपि ये ।
सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः ॥ १५ ॥
यश्च स्ति(२)मितगम्भीरं न तेजो न तमस्ततः (३) ।
अनाख्यमनभिव्यक्तं तद्रूपं पारमात्मिकम् ॥१६॥
नेन्द्रियाणि न वा रूपं न मनः परिकल्पना ।
यत्सर्वं न च यत्सर्वं तद्रूपं पारमात्मिकम् ॥ १७ ॥
परमाणोरपि परं तदणीयो ह्यणीयसः ।
शुद्धं सूक्ष्मं परं शान्तं तदाकाशोदरादपि ॥ १८ ॥
एतद्रहस्यं परममेतत्तत्परमं(४) पदम् ।
एषा गतिर्विरक्तानामेषोऽसौ परमः शिवः ॥ १९ ॥

एते वासिष्ठात् ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे उपदेशविधान-परिच्छेदः ॥७॥

---

(१) भागेच्छा इति पाठा० ॥
(२) यच्चास्ति इति पाठा० ॥
(३) तमिस्रकम् इति पाठा० ॥
(४) मेतच्च परमम् इति पाठा० ॥

# अथ कालसंख्यानम् ॥

षड्भिः प्राणैः पलं प्रोक्तं षष्टिभिर्घटिका च तैः ।
षष्टिभिर्घटिकाभिः स्यादहोरात्रं तु मानवम् ॥ १ ॥
दिनैः पञ्चदशैः पक्षः शुक्लः कृष्णश्च गीयते ।
पक्षद्वयेन मासः स्यात् पितॄणां तदहर्न्निशम् ॥ २ ॥
ऋतुर्मासद्वयेनैव षण्मासैरयनं स्मृतम् ।
अयनद्वितयं वर्षो देवानां वासरो निशा ॥ ३ ॥
तद्द्वात्रिंशत्सहस्रैस्तु चतुर्लक्षैः कलिः स्मृतः ।
शेषं युगत्रयं ज्ञेयं कलेर्द्वित्रिचतुर्गुणम् ॥ ४ ॥
खचतुष्कं रदा वेदाश्चातुर्युग(१)मुदाहृतम् ।
चातुर्युगैकसप्तत्या मन्वन्तरमुदाहृतम् ॥ ५ ॥
चतुर्भिरर्बुदैः कल्पं द्वात्रिंशद्भिश्च कोटिभिः ।
चतुर्द्दश सुरेन्द्राश्च पतन्ति ब्रह्मणोऽहनि ॥ ६ ॥
चतुर्युगसहस्रेण कल्पाख्यं ब्रह्मणो दिनम् ।
तत्प्रमाणा तथा रात्रिः सृष्टिसंहारकारिणी ॥ ७ ॥
अथ कालाग्निरुद्रस्य तृतीयनयनोत्थिता ।
ज्वाला दहति तत् सर्व्वं निर्व्वाणं ब्रह्मणो दिनम्(२) ॥८॥
स्वपतो ब्रह्मणः स्वेदाद् भूमिरेकार्णवा भवेत् ।
निश्वासैः(३) शुष्यते सापि सृजेत्सुप्तोत्थितः पुनः ॥९॥

(१) चतुर्युग इति पाठा० ॥
(२) यतः इति पाठा० ॥
(३) निःश्वासैः इति पाठा० ॥

स्वकालपरिणामेन(१) पूर्ण्णे वर्षशते किल ।
ब्रह्मादीनां तथा शक्तेः क्षयो जन्म पुनः पुनः ॥१०॥
ब्रह्मा हरौ हरी रुद्रे रुद्रो लीयेत(२) ईश्वरे ।
ईशः सदाशिवे सोऽपि शक्तौ शक्तिः परे शिवे ॥ ११ ॥
पुनः सृष्टिः पुनर्न्नाशः पुनः कल्पपरम्परा ।
पुनः पुनरिदं सर्व्वं चक्रवत्परिवर्त्तते ॥ १२ ॥

ये तत्र लीनाः परमे पदे शिवे
मुक्तिं गता देवि त एव नापरे ।
शक्तिप्रणाशे प्रलये महत्यहो
तेषां कदाचित्पतनं न विद्यते ॥ १३ ॥

एते शिवभाषिताद् योगरसायनात् ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे कालसंख्यान-परिच्छेदः॥८॥

---

## अथ शरीरम् (३) ॥

अस्ति कारणमव्यक्तं सर्वव्यापि परापरं ।
सान्निध्यादपि दुर्ग्राह्यं विश्वमूर्त्योपलक्षितम् ॥ १ ॥

(१) परिमाणेन इति पाठः ॥
(२) लीयत इति पाठः ।
(३) शारीरम् इति पाठः ।

नाकारं न निराकारं न च स्त्रीपुन्नपुंसकम् ।
नाम्भस्तेजो(१) मरुद्व्योम भूमिर्दूरे न चान्तिके ॥
ततो निष्ठस्य(२) देवस्य शक्तिरिच्छेत्यजायत ।
चिद्रूपिण्या तया क्रीड़ां कर्त्तुमैच्छत्स्वलीलया ॥३
क्रियारूपा गुणमयी तस्या बुद्धिरजायत ।
ज्ञानशक्तिरिति ख्याता क्रियाशक्तिश्च सा स्मृता ।
बुद्धेरहं ततश्चित्तः(३) शक्तिस्तस्याः सदाशिवः
नभोरूपी ततो वायुरीश्वरः समजायत ॥ ५ ॥
ईश्वरात्समभूद्रुद्रो ज्योतिर्म्मय उमापतिः ।
रुद्राद्विष्णुरभूदाद्यस्त्रैलोक्यपरिपालकः ॥ ६ ॥
विष्णुनाभ्यम्बुजाज्जातो(४) ब्रह्मायं पृथिवीमयः
तदर्थमभवत्पूर्व्वं ब्रह्माण्डं कनकप्रभम् ॥ ७ ॥
तेन सृष्टं स्वशक्त्येदं त्रैलोक्यं सचराचरम् ।
पञ्चभिः सह संभूय पञ्चभूतमयात्मकैः ॥ ८ ॥
ततो ब्रह्मा द्विधा भूतः शिवशक्तिविभागतः ।
स्त्रीपुंरूपेण सौख्यार्थं सुरतेनासृजत्प्रजाः ॥ ९ ॥
ततश्चतुर्मुखस्यासन् दश पुत्रा मनोभवाः ।
तेषां दश ददौ कन्या मनोजाताः प्रजापतिः ॥१

(१) नापस्तेजो इति पाठा० ।
(२) ततोऽनिच्छुस्य इति पाठा० ।
(३) श्चित्तं इति पाठा०
(४) विष्णुनाभ्यक्षयो जातो इति पाठा० ॥

ते सर्वे ज्ञाननिरताः सुसंतुष्टास्तपोधनाः ।
तेषां पुत्रैश्च पौत्रैश्च व्याप्तं सर्वमिदं जगत् ॥ ११ ॥
तत आत्मभुवः पुत्रो मरीचिरिति योऽभवत् ।
दशपुत्रेषु विख्यातस्तस्माज्जातश्च कश्यपः ॥ १२ ॥
सोऽपि दक्षस्य कन्यासु कश्यपः समजीजनत् ।
उत्पत्तिहेतुर्विश्वस्य भूतग्रामांश्चतुर्द्दश ॥ १३ ॥
अष्टधा देवतायोनिस्तिर्य्यग्योनिश्च पञ्चधा ।
एकधा मानुषी योनिरिमे भूताश्चतुर्द्दश ॥ १४ ॥
तेजसा देवकायेषु(१) बभूवुः सप्त धातवः ।
अन्येषामपि कायेषु(२) पार्थिवाः सप्त धातवः ॥१५॥
सर्व्वे मिथुनरूपेण प्रजा उत्पादयन्ति ते ।
मैथुनानन्दनिरता विषयासक्तचेतसः ॥ १६ ॥

तथा केदारखण्डे ॥

यो विष्णुः स शिवो ज्ञेयः शिवो यो विष्णुरेव च ।
पीठिका विष्णुरूपा स्याल्लिङ्गरूपी सदाशिवः॥ १ ॥(३)
भगस्तु वैष्णवी शक्तिर्लिङ्गरूपी सदाशिवः ।
उभयोर्योगतो बीजं ब्रह्मरूपं प्रवर्त्तते ॥ १७ ॥
गर्भाशयो धरापीठं रजो रक्तं तु भास्करः ।
सौम्यं रेतो ब्रह्मरूपं तस्मिंस्तत्र विलम्बते ॥ १८ ॥

(१) देवकार्येषु इति पाठः ।
(२) कार्येषु इति पाठः ।
(३) लि० पु० एष श्लो० न वर्त्तत एव । एतेन केदारखण्डीयश्लोकेन योगरसायनीयश्लोकानां प्रक्रमभङ्ग इव प्रतीयते ॥

सूर्याचन्द्रमसोर्योगममावास्यां विदुर्बुधाः ।
तस्यां प्रजाः प्रजायन्ते यदीच्छा पारमेश्वरी ॥ १९

शुक्रशोणितसंयोगो यदैव किल जायते ।
तदा संजायते जीवो वह्निः सूर्यान्मणेरिव (१) ॥२०

शुक्रेऽधिके भवेत्पुत्रः कन्या रक्ताधिके भवेत् ।
नपुंसकं समत्वेन कर्मणो नियतिर्यथा ॥ २१ ॥

अङ्गप्रत्यङ्गभागश्च(२) ततः पिण्डे(३) प्रजायते ।
चर्मणाच्छादिताः(४) सप्त धातवः स्युरनुक्रमात्॥२२

पिण्ड(५) मज्जास्रुपूर्णानामस्थ्नां षष्टिशतैस्त्रिभिः ।
द्वासप्ततिसहस्राभिर्नाडीभिः पञ्जरं कृतम् ॥ २३ ॥

क्रियाशक्त्या विना क्वापि ज्ञानशक्तिर्न दृश्यते ।
तेनेदं ज्ञानशक्त्यर्थं कृतं वेश्म क्रियामयम् ॥ २४ ॥

चतुर्विंशतिभिस्तत्त्वैः क्रियाशक्तिरचेतना ।
ज्ञानशक्त्या युता वापि लक्ष्यते चेतनावती ॥ २५

सर्वज्ञोऽपि शिवस्तत्र शक्तिसङ्गेन मोहितः ।
नात्मानं न परं वेत्ति विचेष्टति तदिच्छया ॥२६।

प्राणापानमयी शक्तिः षट्चक्राधारसंयुता(६) ।
शान्तं शिवं वशीकृत्य वर्त्तते कामकारतः ॥ २७ ।

(१) सूर्यमणेरिव इति पाठः ॥
(२) भागेन इति पाठः ॥
(३) पिण्डः इति पाठः ॥
(४) च्छादितः इति पाठः ॥
(५) पिण्डं इति पाठः ।
(६) संयुतम् इति पाठः ॥

आधारः कन्दमित्युक्तं स्वाधिष्ठानं च लिङ्गभूः ।
नाभिस्तु मणिपूराख्यं हृदयं विद्ध्यनाहतम् ॥ २८ ॥
विशुद्धिः कण्ठ इत्युक्तमाज्ञाचक्रं भ्रुवोऽन्तरे ।
आधारो हि चतुर्भिन्नः स्वाधिष्ठानं च षड्दलैः॥ २९ ॥
दशभिर्मणिपूराख्यं द्वादशैस्तु अनाहतम् ।
विशुद्धिः षोड़शैर्भिन्नमाज्ञाचक्रं द्वयेन तु ॥ ३० ॥
कालाग्नी रुद्र आधारे शक्तिः कुण्डलिनी तथा ।
आनन्दाख्या स्वाधिष्ठाने शक्त्या कामाख्यया सह ॥३१॥
नाभौ ब्रह्मा हृदि श्रीशः कण्ठे रुद्रो व्यवस्थितः ।
ईश्वरो लम्बिकायां च तदूर्ध्वे च सदाशिवः ॥ ३२ ॥
ज्योतिस्थानानि चैतानि षट् चक्राणि विदुर्बुधाः(१) ।
नासामूलं विन्दुस्थानं(२) नादस्योत्पत्तिकारणम् ॥ ३३ ॥
तस्योर्ध्वं योगिनीचक्रं तदूर्ध्वं(३) शक्तिरास्थिता ।
शक्त्यूर्ध्वे तु शिखा प्रोक्ता शिखान्ते धूमवत्तमः॥३४॥
तमसोऽन्ते परं ज्योतिरलक्ष्यः परमेश्वरः ।
यं दृष्ट्वैव विलीयन्ते योगिनः स्थिरचेतसः ॥ ३५ ।
चराचरेषु पिण्डस्थं पदस्थं चा(४)निलादिषु ।
भास्करादिषु रूपस्थं रूपातीतं परं विदुः ॥ ३६ ॥

(१) जगुर्बुधाः इति पाठा० ॥
(२) विन्दुः स्थानं इति पाठा० ॥
(३) तदूर्ध्वे इति पाठा० ॥
(४) खा इति पाठा० ॥

द्वासप्ततिसहस्राणि कन्दान्नाड्यो विनिर्गताः ॥
प्रविश्य नाभिदेशे तु सर्वाङ्गेषु ततो गताः ॥ ३७ ॥

इड़ा च पिङ्गला चैव सुषुम्ना(१) च सरस्वती ।
गान्धारी हस्तिजिह्वा च पूषा चैव निगद्यते ॥३८॥

अलम्बुषा कुहूश्चैव शङ्खिनी दशमी तथा(२) ।
एताः प्राणवहा ज्ञेयाः प्रधाना दश नाड़िकाः ॥ ३९ ॥

इड़ा नासापुटे वामे पिङ्गला दक्षिणे भवेत् ।
सुषुम्ना(३) तालुभिश्चैव(४) ब्रह्मद्वारं प्रवर्त्तिता ॥४०॥

सरस्वती च जिह्वायां गान्धारी वामकर्णके ।
दक्षिणे हस्तिजिह्वा स्यात्(५) पूषा वामे च लोचने ॥४१॥

अलम्बुषा दक्षिणे स्याद् गुदद्वारे(६) कुहूर्भवेत् ॥४२ ॥

आ ब्रह्मरन्ध्रान्मार्गेण ब्रह्मदण्डस्य शङ्खिनी ।
सदा विन्दुवहा ज्ञेया लिङ्गद्वारे च शङ्खिनी ॥ ४३ ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
नागः कूर्म्मश्च कृकलो(७) देवदत्तो धनञ्जयः ॥ ४४ ॥

(१) सुषुम्णा इति पाठा० ॥

(२) मता इति पाठा० ॥

(३) सुषुम्णा इति पाठा० ॥

(४) तालु भित्चैव इति पाठा० ॥

(५) ख्या इति पाठा० ॥

(६) भुजद्वारे इति पाठा० ॥

(७) कृकरो इति पाठा० ॥

प्राणो हि दशधा ह्येष दशनामाथ वा(१) प्रभुः ।
द्वासप्ततिसहस्रासु नाड़ीषु विचरत्यलम् (२)॥ ४५ ॥
हृदि प्राणो गुदेऽपानः समानो नाभिसंगतः ॥४६॥
उदानः कण्ठदेशे च व्यानः सर्वशरीरगः ॥ ४७ ॥
सर्वाङ्गमोटको नागः कूर्म्म उन्मेषकारकः ।
कृतः(३) क्षुतोद्गारकरो देवदत्तस्तु जृम्भकः ॥ ४८ ॥
धनञ्जयो नादकरः स्यादेवं दशधा मरुत् ।
येन जीवति जीवोऽयं निर्ज्जीवो यं विना भवेत्॥४९॥
स प्राण इति विख्यातो वायुः क्षेत्रचरः परः ।
कन्दाग्रात्प्रोत्थितः प्राणः सदा वहति देहिनाम्॥५०॥
यद्गतं(४) जीवमाश्वास्य बहिर्गत्वा निवर्त्तते ।
पिङ्गलेड़ापथा(५) गत्वा पीत्वा च गगनामृतम् ॥५१॥
निवृत्य जीवं सन्तर्प्य पुनः कन्दे प्रवर्त्तते ॥ ५२ ॥
अपानेन पुनः कन्दात्(६) प्रेरितः कालरूपिणा ।
निश्वासो(७)च्छ्वासकृद्भाति जपन् हंसेत्यहर्न्निशं ॥ ५३॥

(१) दशानामथवा इति पाठः ॥
(२) संस्थितः इति पाठ० ॥
(३) कृकः इति पाठ० ॥
(४) हृद्गतं इति पाठ० ॥
(५) पथं इति पाठ० ॥
(६) कश्चित् इति पाठ० ॥
(७) निश्वासो इति पाठ० ॥

हंसश्च द्वादशदले जीवात्मा हृदयाम्बुजे ।
तिष्ठन् करोति चैतन्योद्द्योतं(१) दीपो घटे यथा॥५४॥
बद्धः कर्मगुणैर्बुद्धिसंयुतस्त्रिगुणात्मकः ।
ग्राही पञ्चेन्द्रियार्थानां मनोदूतेन सर्वदा ॥ ५५ ॥
चेतयन्निखिलं देहं जीवात्मा सुखदुःखभुक् ।
आत्मानं नैव जानाति कामक्रोधादिभिर्हतम् ॥५५॥
स एव जीवः स प्राणी स शरीरी निगद्यते ।
स एव गर्भदुःखस्य सोढ़ा स्वेनैव कर्म्मणा ॥ ५५ ॥
इत्यङ्गैः संयुतः सर्व्वैर्देहिनो बालकाकृतिः ।
मातुराहाररसतो देहे गर्भोऽभिवर्द्धते ॥ ५६ ॥
ततो गर्भस्थितः प्राणी चिन्तयेत्किं कृतं मया ।
दुष्कृतं येन निरये गर्भाख्ये पतितोऽस्म्यहम् ॥ ५७ ॥
निःसृतोऽहं करिष्यामि सुकृतानीति चिन्तयन् ।
उल्वणात्करपादाभ्यां कृत्वा द्वारं विनिर्गतः ॥ ५८ ॥
योनिद्वारविनिष्क्रान्तो विसंज्ञः पतितः क्षितौ ।
न स पूर्वं स्मरेत् किञ्चिन्मायया बध्यते(२) पुनः ॥ ५९ ॥
अज्ञानैकहतो बाल्ये यौवने गृहतत्परः ।
वार्द्धकेऽपत्यचिन्तार्त्तः कर्म्मभिर्बध्यते पुनः ॥ ६० ॥
तत आयुःक्षये कन्दादपानः कालरूपवान् ।
प्राणं बहिः करोत्येव शरीरात् कुपितः किल ॥६१ ॥

(१) चैतन्यद्योतं इति पाठा० ॥
(२) बाध्यते इति पाठा० ॥

ऊर्ध्वं श्वसंस्ततः प्राणो यात्यलब्धस्थितिस्तनोः ।
तं यान्तमनुयात्येव जीवः कालप्रणोदितः ॥ ६२ ॥
निर्गच्छन्नेव वपुषो गृह्यते यमकिङ्करैः ।
ते तं नयन्ति बहुधा भीषयन्तो यमान्तिकम् ॥ ६३ ॥
पञ्चेन्द्रियमनोबुद्धितन्मात्रैर्भूतपञ्चकैः ।
युतः(१) कर्मशरीरेण प्रयाति यमसन्निधिम् ॥ ६४ ॥
ततो यमाज्ञया स्वर्गं नरकं वा प्रपद्यते ।
अवशिष्टेन पुण्येन पापेन च समन्वितः ।
तेभ्यो निर्गत्य भूतेषु जायते कर्म्मतः पुनः ॥ ६५ ॥
एवं कदाचिन्नरकं स्वर्गं योन्यन्तराण्यपि ।
प्रयान्ति जीवा मोहेन मोहिता भवसंकटे ॥ ६६ ॥

एते योगरसायनात् ॥

एते जीवाश्चिराद्भावाद्भव(२)भावनया हिताः ।
ब्रह्मणः कलिका(३)काराः सहस्रायुतकोटिशः ॥६७॥
संख्यातीताः पुरा जाता जायन्तेऽद्याभि(४) चाभितः ।
उत्पत्स्यन्तेऽपि वै चान्ये(५) कणौघा इव निर्झराः (६)॥६८॥

(१) पुनः इति पाठा० ॥
(२) एते हि जीवाश्चिद्भावा भवे इति पाठा० ॥
(३) कलिता इति पाठा० ॥
(४) जायन्तेऽद्यापि इति पाठा० ॥
(५) चैवान्ये इति पाठा० ॥
(६) निर्झरात् इति पाठा० ॥

स्ववासनावशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ ६९ ॥

अनारतं प्रतिदिशं प्रतिदेशं जले स्थले ।
जायन्ते च विलीयन्ते(१) बुद्बुदा इव वारिणि ॥७०॥

केचित्प्रथमजन्मानः केचिज्जन्मशताधिकाः ।
केचिच्चासंख्यजन्मानः केचिद् द्वित्रिभवान्तराः ॥ ७१ ॥
विहरन्ति जगत्केचिन्(२) निपतन्त्युत्पतन्ति च ।
कन्दुका इव हस्तेन मृत्युनाविरतं हताः ॥ ७२ ॥

युग्मम् ॥

आशापाशशतैर्बद्धा वासनाभरभाविनः(३) ।
कायात्कायमुपायान्ति वृक्षाद् वृक्षमिवाण्डजाः ॥ ७३ ॥
दिवि देवा भुवि नराः पाताले भोगिनोऽसुराः ।
ब्रह्माण्डोदुम्बरफले स्फुरन्मशकवत्स्थिताः ॥ ७४ ॥
तावद् भ्रमन्ति संसारे प्राणिनो मनसो भ्रमात् ।
यावन्मूढा न पश्यन्ति स्वं चिदात्मानमात्मना ॥७५॥

चिदानन्दमये देवे क्रियतां चित्तसंगतिः ।
मोहदीर्घमयी(४) निद्रा त्यज्यतां संप्रबुध्यताम् ॥ ७६ ॥

---

(१) म्रियन्त च इति पाठ० ॥
(२) जगत्येके इति पाठ० ॥
(३) वाहिनः इति पाठ० ॥
(४) दीर्घमोहमयी इति पाठ० ।

तत्कर्म्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म्म विद्यान्या शिल्पि(१)नैपुणम् ॥७७॥

एते वाशिष्ठात् ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे शरीराख्यान-परिच्छेदः ॥६॥

---

## अथ योगविद्यानिरूपणम् (२) ॥

### अथ योगः (३) ॥

मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा ।
योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः ॥ १ ॥
आसनं प्राणसंरोधो ध्यानं चैव समाधयः (४) ।
एतच्चतुष्टयं विद्धि सर्वयोगेषु संमतम् ॥ २ ॥
ब्रह्मविष्णुशिवादीनां मन्त्रो जप्यविशारदैः ।
साध्यते मन्त्रयोगस्तु वत्सराजादिभिर्यथा ॥ ३ ॥

इति मन्त्रयोगः (५) ॥

---

(१) शिल्प इति पाठा० ।
(२) अथ योगः इति पाठा० ॥
(३) तत्र मन्त्रयोगः इति पाठा० ॥
(४) समाधिकः इति पाठा० ॥
(५) पि० पु० इति मन्त्रयोगः इति नास्ति ॥

## अथ लययोगः ।

कृष्णद्वैपायनाद्यैस्तु साधितो लयसंज्ञितः ।
नवस्वेव हि चक्रेषु लयं कृत्वा महात्मभिः ॥ ४ ॥
प्रथमं ब्रह्म चक्रं स्यात्त्रिरावर्त्ता(१) भगाकृतिः(२) ।
अपाने मूलकन्दाख्ये कामरूपं च तज्जगुः ॥ ५ ॥
तदेव वह्निकुण्डं स्यात्तत्र(३) कुण्डलिनी तथा ।
तां जीवरूपिणीं ध्यायेज्ज्योतिष्कां मुक्तिहेतवे ॥६
स्वाधिष्टानं द्वितीयं स्याच्चक्रं तन्मध्यगं विदुः ।
पश्चिमाभिमुखं लिङ्गं प्रवालाङ्कुरसन्निभम् ॥ ७ ॥
तत्रोड्डीयान(४)पीठे तु तद्ध्यात्वा कर्षयेज्जगत् ॥ ८ ॥
तृतीयं नाभिचक्रं स्यात्तन्मध्ये भुजगी स्थिता ।
पञ्चावर्त्ता मध्यशक्तिश्चिद्रूपा विद्युदाकृतिः ॥ ९ ॥
तां ध्यात्वा सर्वसिद्धीनां भाजनं जायते बुधः ।
चतुर्थं हृदये चक्रं विज्ञेयं तदधोमुखम् ।
ज्योतीरूपं च तन्मध्ये हंसं ध्यायेत्प्रयत्नतः ॥ १० ॥
तं ध्यायतो जगत्सर्वं वश्यं स्यान्नात्र संशयः ।
पञ्चमं कण्ठचक्रं स्यात्तत्र वामे इड़ा भवेत् ॥ ११ ॥

(१) त्रिरावर्त्तं इति पाठ० ॥
(२) भगाकृति इति निर्विसर्गं पाठ० ॥
(३) स्याच्छक्तिः इति पाठ० ॥
(४) तत्रोड्डीयाण इति पाठ० ॥

दक्षिणे पिङ्गला ज्ञेया सुषुम्ना(१) मध्यतः स्थिता ।
तत्र ध्यात्वा शुचि(२)ज्योतिः सिद्धीनां भाजनं भवेत्॥१२॥

षष्ठं च(३) तालुके(४) चक्रं घण्टिकास्थानमुच्यते ।
दशमद्वारमार्गं तद्राजदन्तं(५) च तज्जगुः ॥ १३ ॥
तत्र शून्ये लयं कृत्वा मुक्तो भवति निश्चितम्॥१४॥
भूचक्रं सप्तमं विद्याद्बिन्दुस्थानं च तद्विदुः ।
भ्रुवोर्मध्ये वर्त्तुलं च ध्यात्वा ज्योतिः प्रमुच्यते ॥१५॥
अष्टमं ब्रह्मरन्ध्रं स्यात्परं निर्वाणसूचकम् ।
तद् ध्यात्वा सूचिकाग्राभं धूमाकारं विमुच्यते ॥१६॥
तच्च जालन्धरं ज्ञेयं मोक्षदं लीनचेतसाम् ॥ १७ ॥
नवमं व्योम(६)चक्रं स्याद्दलैः षोड़शभिर्युतम् ।
संविद्रूपा च तन्मध्ये शक्तिरूर्ध्वा स्थिता परा॥१८॥
तत्र पूर्णगिरौ पीठे शक्तिं ध्यात्वा विमुच्यते ॥१९॥
एतेषां नवचक्राणामेकैकं ध्यायतो मुनेः ।
सिद्धयो मुक्तिसंयुक्ताः(७) करस्थाः स्युर्दिने दिने॥२०॥

(१) सुषुम्णा इति पाठा० ॥
(२) शुचिर्ज्योतिः इति पाठा० ॥
(३) तु इति पाठा० ॥
(४) तालुका इति पाठा० ॥
(५) तु राजदन्तं इति पाठा० ।
(६) ब्रह्म इति पाठा० ।
(७) सहिताः इति पाठा० ॥

कोदण्डद्वयमध्यस्थं पश्यन्ति ज्ञानचक्षुषा ।
कदम्बगोलकाकारं ब्रह्मलोकं व्रजन्ति ते ॥ २१ ॥
ऊर्ध्वशक्तिनिपातेन अधःशक्तेर्न्निकुञ्चनात् ।
मध्यशक्तिप्रबोधेन जायते परमं सुखम् ॥ २२ ॥
इति लययोगः(१) ॥

## अथ राजयोगः ॥

दत्तात्रेयादिभिः पूर्व्वं साधितोऽयं महात्मभिः ।
राजयोगो मनोवायू स्थिरौ कृत्वा प्रयत्नतः ॥ २३
पूर्व्वाभ्यस्तौ मनोवातौ मूलाधारनिकुञ्चनात् ।
पश्चिमे दण्डमार्गे तु शङ्खिन्यन्तः प्रवेशयेत् ॥ २४ ॥
ग्रन्थित्रयं भेदयित्वा नीत्वा भ्रमरकन्दरम् ।
ततस्तु नादजो विन्दुस्ततः शून्ये लयं व्रजेत् ॥ २५
अस्याभ्यासात्(२) स्थिरस्वान्त ऊर्ध्वरेताश्च जायते
परानन्दमयो योगी जरामरणवर्ज्जितः ।
अथवा मूलसंस्थानामुद्घातैस्तु प्रबोधयेत् ॥ २६ ॥
सुप्तां कुण्डलिनीं शक्तिं विश(३) तन्तुनिभाकृतिम् ।
सुषुम्ना(४)तः प्रविश्यैव(५) पञ्च वक्त्राणि(६) भेदयेत् ॥ २७

(१) मू० पु० इति लययोगः इति नास्ति ॥
(२) अभ्यासात्तु इति पाठा० ॥
(३) विस इति पाठा० ॥
(४) सुषुम्णा इति पाठा० ॥
(५) प्रवेश्यैव इति पाठा० ॥
(६) चक्राणि इति पाठा० ॥

ततः शिवे शशाङ्काभे स्फुरन्निर्म्मलरोचिषि(१) ।
सहस्रदलपद्मान्तःस्थिते शक्तिं नियोजयेत् ॥ २८ ॥
अथ तच्छुद्धये(२) सर्व्वां सबाह्याभ्यन्तरां तनुम् ।
प्लावयित्वा ततो योगी न किंचिदपि योजयेत्(३)२९॥
तत्र(४) उत्पद्यते तस्य समाधिर्निस्तरङ्गितः ।
एवं निरन्तराभ्यासाद्योगी सिद्धः प्र(५)जायते ॥३० ॥
एते शार्ङ्गधरस्य ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे मन्त्रयोगलययोगराजयोग-परिच्छेदः ॥१०॥

---

## अथ हठयोगः ॥

द्विधा हठः स्यादेकस्तु गोरक्षादिसुसाधितः ।
अन्यो मृकण्डुपुत्राद्यैः साधितोऽनिशमुद्यतैः ॥ १ ॥
तत्र गोरक्षसदृशैः साधितो यः स कथ्यते ।
धीरैरपि हि दुःसाध्यः किं पुनः प्राकृतैर्जनैः ॥ २ ॥

(१) तेजसि इति पाठा० ॥
(२) तत्सुधया इति पाठा० ॥
(३) चिन्तयेत् इति पाठा० ॥
(४) ततः इति पाठा० ॥
(५) स इति पाठा० ॥

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि स्मृतानि षट्॥ ३ ।

(१)

एकान्ते विजने देशे पवित्रे निरुपद्रवे ।
कम्बलाजिनवस्त्राणामुपर्यासनमभ्यसेत् ॥ ४ ॥
उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः ।
ऊरुमध्ये तथोत्तानौ पाणी पद्मासनं त्विदम् ॥ ५ ।

इति आसनम्(२)॥

## अथ प्राणायामः ॥

तत्र पद्मासनं बद्ध्वा ततः संकोचयेदधः(३) ।
समदण्डं शिरः कृत्वा नासिकान्तर्दृशं नयेत् ॥ ६ ॥
यथैवोत्पलनालेन आकर्षति नरो जलम् ।
योगी योगसमाविष्टस्तथा कर्षति मारुतम् ॥ ७ ॥
काकचञ्चुपुटीकृत्य ओष्ठासक्ता(४)निलं पिबेत् ।
ओंकारध्वनिनाकृष्य पूरयेद्यावदन्तरम् ॥ ८ ॥
पूरणात्पूरकं प्रोक्तं कुम्भकस्तु निकुम्भनात् ।
रेचकं रेचनात्सूक्ष्मं ततोऽन्तः शोध्यते त्रिभिः ॥ ९ ॥
प्राणायामान्नरः षष्टिं कुर्यादेवमहर्मुखे ।
चत्वारिंशच्च मध्याह्ने संध्यायां विंशतिर्भवेत्॥ १० ॥

(१) पि॰ पु॰ अथ आसनम् इत्यधिकं वर्त्तते ॥
(२) पि॰ पु॰ इति आसनम् इति नास्ति ।
(३) स्वधः इति पाठ॰ ॥
(४) ओष्ठौ प्रोक्ता इति पाठ॰ ॥

अर्द्धरात्रे विंशतिः स्यादेवं प्राणविनिग्रहः ।
शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनम् ॥ ११ ॥

कृशत्वं च शरीरस्य जायते वै ध्रुवं तदा ।
लवणं सर्षपाश्चाम्ल(१)मुष्णं रूक्षं च तीक्ष्णकम् ।
स्त्रीसेवामग्निसेवां च बह्वाशित्वं च वर्जयेत् ॥१२॥

क्षीरं घृतं च मिष्टान्नं मिताहारश्च शस्यते ।
मितोक्तिः पवनाभ्यासो निद्रायाश्च जयस्तथा ॥१३॥
केवले कुम्भके सिद्धे रेचपूरकवर्जिते ।
न तस्य दुर्ल्लभं किंचित् त्रिषु लोकेषु विद्यते ॥ १४ ॥

ततोऽधिकतराभ्यासाद्भवतः स्वेदकम्पने ।
ततोऽधिकतराभ्यासाद्दार्दुरी जायते ध्रुवम् ॥ १५ ॥

यथैव दर्दुरो गच्छेदुत्प्लुत्योत्प्लुत्य भूतले ।
पद्मासनस्थितो योगी तथा गच्छति भूतले ॥ १६ ॥
ततोऽधिकतराभ्यासाद् भूमित्यागश्च जायते ।
स्वल्पं वा बहु वा भुक्त्वा योगी न व्यथते तदा ॥१७॥
अल्पमूत्रपुरीषश्च स्वल्पनिद्रश्च जायते ।
कीट्टिभो (२) दूषिका लाला स्वेदो दुर्गन्धिता तनोः ।
एतानि सर्वदा तस्य न जायन्ते ततः परम् ॥ १८ ॥

(१) सरसं साम्लं इति पाठा० ॥
(२) कौटिल्यो इति पाठा० ॥

स्त्रीसङ्गं वर्ज्जयेद्यत्नाद् विन्दुं रक्षेत्प्रयत्नतः ।
आयुःक्षयो विन्दुनाशादसामर्थ्यं च जायते ॥ १९ ॥

इति प्राणायामः (१)॥

## अथ प्रत्याहारः ॥

### पञ्च धारणाः(२) ॥

विषयद्वारनिष्क्रान्तं यावत्स्वविषयान्प्रति ।
चित्तं निवार्य्यते यत्र प्रत्याहारः स उच्यते ॥२०॥

(३)

गुरूपदेशतश्चित्तमेकस्मिन् स्थानके यदि ।
वायुश्च रुध्यते यत्र धारणा साभिधीयते(४) ॥२१॥

(५)

नाभेरधो गुदस्योर्ध्वं घटिकाः पञ्च धारयेत् ।
वायुं ततो लभेत्पृथ्वीधारणां तद्भयापहाम् ॥ २२ ॥
पृथिवीसंभवैर्मृत्युर्न(६) भवेदस्य योगिनः ।

इति पृथ्वीधारणा (७) ॥

(१) पि॰ पु॰ इति प्राणायामः इति नास्ति ॥
(२ पि॰ पु॰ पञ्च धारणाः इति नास्ति ॥
(३) पि॰ पु॰ अथ पञ्च धारणाः इत्यधि॰ वर्त्त॰ ॥
(४) विधीयते इति पाठा॰ ॥
(५) पि॰ पु॰ अथ पृथ्वीधारणा इति अधि॰ वर्त्त॰ ॥
(६) संभवो मृत्युर्न्न इति पाठा॰ ॥
(७) पि॰ पु॰ इति पृथ्वीधारणा इति नास्ति ॥

(१)
नाभ्यूर्ध्वमण्डले(२) वायुं धारयेत्पञ्च नाडिकाः ।
ततो जलाद्भयं नास्ति जलमृत्युर्न योगिनः ॥ २३ ॥

इति जलधारणा(३) ॥

(४)
नाभ्यूर्ध्वमण्डले वायुं धारयेत्पञ्च नाडिकाः ।
आग्नेयी धारणा सेयं मृत्युस्तस्य न वह्निना ॥ २४ ॥

इति तेजोधारणा(५) ॥

(६)
नासाभ्रूमध्यदेशे तु वायुं तथैव धारयेत् ।
वायवी धारणा सेयं मृत्युस्तस्य न वायुना ॥२५॥

इति वायुधारणा (७)॥

(८)
भ्रूमध्यस्योपरिष्टाच्च धारयेत्पञ्च नाडिकाः ।
वायुं योगी प्रयत्नेन सेयमाकाशधारणा ॥ २६ ॥

(१) पि॰ पु॰ अथ जलधारणा इत्यधि॰ वर्त्त॰ ॥
(२) नाभिस्थाने ततो इति पाठ॰ ॥
(३) पि॰ पु॰ इति जलधारणा इति नास्ति ॥
(४) पि॰ पु॰ अथ तेजोधारणा इत्यधि॰ वर्त॰ ।
(५) पि॰ पु॰ इति तेजोधारणा इति नास्ति ॥
(६) पि॰ पु॰ अथ वायुधारणा इत्यधि॰ वर्त्त॰ ॥
(७) पि॰ पु॰ इति वायुधारणा इति नास्ति ॥
(८) पि॰ पु॰ अथाकाशधारणा इत्यधि॰ वर्त्त॰ ॥

आकाशधारणां कुर्व्वन् मृत्युं जयति निश्चितम् ।
यत्र तत्र स्थितो वापि सुखमत्यन्तमश्नुते ॥ २७ ।

इत्याकाशधारणा ॥

एवं पञ्च धारणाः(१) ॥

## अथ ध्यानम् ॥

वायुः परिचितो यत्नादग्निना सह कुण्डलीम् ।
बोधयित्वा सुषुम्ना(२)यां प्रविशेदग्निरोधतः ॥ २८ ।
महापथं प्रविश्यैव(३) शून्यस्थाने लयं व्रजेत् ।
यदा तदा भवेद्योगी त्रिकालामलदर्शनः ॥ २९ ॥

इति ध्यानम् (४) ।

## अथ समाधिः ॥



यदेतद् ध्यानमाख्यातं तच्चेत्परिणमत्यपि ।
चैतन्यानन्दरूपेण स समाधिरुदीरितः ॥

इति समाधिः । (५)

## अथ जागरितस्वप्नसुषुप्तितुरीयावस्थाः ॥

बुद्धिपूर्वं तु यज्ज्ञानं बहिर्विषयसेवितम् ॥ ३० ॥
प्रत्यक्षमनिरुद्धं च तज्जागरितमुच्यते ।
अर्थाभावं(६) तु यज्ज्ञानं प्रत्यक्षमिव दृश्यते ॥ ३१ ॥

(१) पि॰ पु॰ इत्याकाशधारणा इति एवं पञ्च धारणाः इति च नास्ति ॥
(२) सुषुम्णा इति पाठ॰ ॥
(३) प्रविश्यैवं इति पाठ॰ ॥
(४) पि॰ पु॰ इति ध्यानम् इति नास्ति ॥
(५) पि॰ पु॰ इति समाधिः इति नास्ति ॥
(६) अर्थाभावे इति पाठ॰ ॥

गन्धर्व्वनगराकारं स्वप्नं तदुपलक्षयेत् ।
जाग्रत्स्वप्नावुभावेतौ नित्यं यत्र प्रतिष्ठितौ ॥३२ ॥
उत्पत्तिः प्रलयश्चैव सौषुप्तमवधारयेत् ।
जीवाभावो विनिद्रा च द्वयं यत्र न विद्यते ॥
तत्तुरीयमिति प्रोक्तमुत्पत्तिलयवर्ज्जितम् ।
इति जागरितस्वप्नसुषुप्तितुरीयावस्थाः (१) ॥

## अथ मुद्रादिः(२)॥

अथ देहं स्थिरीकर्त्तुं योगिनां सिद्धिमिच्छताम् ।
कथ्यन्ते शुद्धिकर्म्माणि यैः सिद्धिं प्रापुरुत्तमाः ॥३३॥
महामुद्रां नभोमुद्रामुड्डीयाणां(३) जलन्धरम्(४) ।
मूलबन्धं स्थिरं दण्डं यः करोति स सिद्ध्यति ॥३४॥

## अथ महामुद्रा ॥

पार्ष्णिं तु वामपादस्य योनिस्थाने नियोजयेत् ।
प्रसार्य्य दक्षिणं पादं हस्ताभ्यां धारयेद् दृढम् ॥३५॥
चिबुकं हृदि विन्यस्य पूरयेद्वायुना पुनः ।
कुम्भकेन यथाशक्त्या धारयित्वा तु रेचयेत् ॥३६॥
वामाङ्गेन समभ्यस्य दक्षिणाङ्गेन चाभ्यसेत् ॥३७॥
इति महामुद्रा(५) ॥

(१) पिट० पु० इति जागरितस्वप्नसुषुप्तितुरीयावस्थाः इति नास्ति ॥
(२) पिट० पु० अथ मुद्रादिः इति नास्ति ॥
(३) मुड्डीयाणं इति पाठा० ॥
(४) जालन्धरम् इति पाठा० ॥
(५) पिट० पु० इति महामुद्रा इति नास्ति ॥

(१)

अन्तः कपालविवरे जिह्वामाकुञ्च्य चार्पयेत् ।
भ्रूमध्यदृष्टिरमृतं पिबेत्खेचरमुद्रया ॥ ३८ ॥

इति नभोमुद्रा(२) ॥

(३)

कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढ़मिच्छया ।
जालन्धरो बन्ध एष सुधाव्ययनिवारणः ॥ ३९ ॥

नाभिस्थोऽग्निः कपालस्थः सहस्रकमलाच्च्युतम् ।
अमृतं सर्वदा सार्व्वं(४) पिबञ्ज्वलति देहिनाम् ॥४०॥

तथा(५) सोऽग्निः सदमृतं(६) न पिबेत्तद्विधिस्त्वयम् ।
याति पश्चिममार्गेण एवमभ्यस्यतस्तदा(७) ॥ ४१ ॥
अमृतीकुरुते देहं जालन्धरमिति स्मृतम् ।

इति जालन्धरम्(८) ॥

(१) पि० पु० अथ नभोमुद्रा इत्यधि० वर्त्त० ॥
(२) पि० पु० इति नभोमुद्रा इति नास्ति ॥
(३) पि० पु० अथ जालन्धरम् इत्यधि० वर्त्त० ॥
(४) सर्वं इति पाठा० ॥
(५) यथा इति पाठा० ॥
(६) स्तदमृतं इति पाठा० ॥
(७) स्सदा इति पाठा० ॥
(८) पि० पु० इति जालन्धरम् इति नास्ति ॥

(१)

उड्डीयाणं तु सहजं कथितं गुरुणा सदा ।
अभ्यसेदस्ततन्द्रस्तु वृद्धोऽपि तरुणो भवेत् ॥ ४२ ॥

नाभेरूर्ध्वमधश्चापि तानं कुर्यात्प्रयत्नतः ।
षण्मासाभ्यासतो मृत्युं जयत्येव न संशयः ॥४३॥

इति उड्डियाणम्(२) ॥

(३)

मूलबन्धं च यो नित्यमभ्यसेत्स ह(४) योगवित् ।
गुदं पार्ष्ण्या तु संपीड्य वायुमाकुञ्चयेद् बलात् ॥४४॥

वारं वारं यथा चोर्ध्वं समायाति समीरणः ॥४५॥
प्राणापानौ नादविन्दू मूलबन्धेन चैकतां ।
गत्वा योगस्य संसिद्धिं गच्छतो नात्र संशयः ॥४६॥

अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः ।
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ४७ ॥

इतिमूलबन्धः(५) ॥

---

(१) पिट० पु० अथ उड्डीयाणम् इत्यधि० वर्त्त० ॥
(२) पिट० पु० इति उड्डीयाणम् इति नास्ति ॥
(३) पिट० पु० अथ मूलबन्धः इत्यधिकं वर्त्त० ॥
(४) हि इति पाठा० ॥
(५) पिट० पु० इति मूलबन्धः इति नास्ति ॥

(१)

पृष्ठबन्धं दृढ़ं(२)कुर्यादनम्रं शिरसंघयम् ।
दण्डधारणमेतद्धि योगिनां परमं(३) स्मृतम् ॥ ४८ ॥
इति दण्डधारणम्(४) ॥
एते योगशास्त्रेभ्यः ॥

# इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे प्रथमहठयोग-परिच्छेदः ॥११॥

---

## अथ मार्कण्डेयादिसाधितो द्वितीयो हठयोगः ॥

श्लोकार्द्धेन प्रवक्ष्यामि यन्नोक्तं(५) व्यासकोटिभिः ।
ममेति मूलं दुःखस्य न ममेति च निर्वृतेः (६) ॥१॥

निर्म्ममत्वं विरागाय वैराग्याद्योगसंगतिः ।
योगाच्च जायते ज्ञानं ज्ञानान्मुक्तिः प्रजायते ॥२॥

(१) पि॰ पु॰ अथ दण्डधारणम् इत्यधि॰ वर्त्त॰ ॥
(२) स्थिरं इति पाठ॰ ।
(३) स्थिर इति पाठ॰ ।
(४) पि॰ पु॰ इति दण्डधारणम् इति नास्ति ।
(५) यच्चोक्तं इति पाठ॰ ॥
(६ निर्वृतिः इति पाठ॰ ॥

उपयोगेन(१) पुण्यानां प्राक्तनानां तथांहसां ।
कर्त्तव्यमिति नित्यानामकामकरणात्तथा ॥३॥
असंचयादपूर्व्वस्य क्षयात्पूर्वार्ज्जितस्य च ।
कर्म्मणो बन्धमाप्नोति शरीरं(२) न पुनः पुनः ॥४॥
अथेह कथ्यतेऽस्माभिः कर्म्मणा येन बन्धनम् ।
छिद्यते तदुपायेन श्रुत्वा तत्र प्रवर्त्यताम् ॥ ५ ॥
अष्टावङ्गानि योगस्य यमो नियम आसनम् ।
प्राणायामः प्रत्याहारो धारणाध्यानतन्मयाः(३) ॥६॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यपरिग्रहः ।
इष्टानिष्टपरा चिन्ता यम एष प्रकीर्तितः ॥ ७ ॥

इति यमः (४) ॥

## अथ नियमः ॥

स्वाध्यायशौचं सन्तोषो(५) देवताराधनं तथा (६)।
वैराग्यं च जनासङ्गो नियमोऽप्येष उच्यते ॥ ८ ॥

इति नियमः (७) ॥

(१) उपभोगेन इति पाठा० ॥
(२) शारीरं इति पाठा० ॥
(३) तन्मयः इति पाठा० ॥
(४) पि० पु० इति यमः इति नास्ति ॥
(५) स्वाध्यायशौचसंतोषा इति पाठा० ॥
(६) तपः इति पाठा० ॥
(७) पि० पु० इति नियमः इति नास्ति ॥

## अथ आसनम् ॥

नाध्मातः(१) क्षुधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं योगज्ञो नित्यं सिद्ध्यर्थमादृतः ॥ ९ ॥
न शीते नाति चैवोष्णे न दुर्गे नाम्बुनस्तटे ।
युञ्जीत योगं योगज्ञो नित्यं सिद्ध्यर्थमादृतः(२) ॥१०॥
न शीते नाति चैवोष्णे न दुर्गे नाम्बुनस्तटे ।
न सोपद्रवदेशेषु योगं संसाधयेत्क्वचित् ॥ ११ ॥
एकान्ते विजने रम्ये पवित्रे निरुपद्रवे ।
सुखासने समाधिः स्याद्वस्त्राजिनकुशोत्तरे ॥ १२ ॥
पद्ममर्द्धासनं चापि तथा सिद्धासनादिकम् ।
आस्थाय योगं युञ्जीत कृत्वा च प्रणवं हृदि ॥ १३ ॥
समः समासनो भूत्वा संहृत्य चरणावुभौ ।
संवृतास्यस्तथा चोरः सम्यग्विष्टभ्य चाग्रतः ॥ १४ ॥
पार्ष्णिभ्यां लिङ्गवृषणावस्पृशन् प्रयतः स्थितः ।
किंचिदुन्नामितशिरा दन्तैर्दन्तानसंस्पृशन् (३) ॥१५॥
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
कुर्याद् दृढं पृष्ठवंशमुड्डीयाणं तथोदरे ॥ १६ ॥
त्रिभिर्विशेषकम् (४)॥

(१) नाध्यातः इति पाठा० ॥
(२) पि० पु० एष श्लो० ना० ॥
(३) न संस्पृशेत् इति पाठा० ॥
(४) पि० पु० त्रिभिर् इति पाठा० ॥

उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः ।
ऊरुमध्ये तथोत्तानौ पाणी पद्मासनं त्विदम् ॥१७॥
दक्षिणोरुतले वामं पादं न्यस्य तु दक्षिणम् ।
वामोरोरुपरि स्थाप्यमेतदर्द्धासनं मतम् ॥ १८ ॥
पार्ष्णिं तु वामपादस्य योनिस्थाने नियोजयेत् ।
वामोरोरुपरि स्थाप्यो दक्षिणः सैद्धमासनम् ॥१९ ॥

## अथ प्राणायामः ॥

प्राणायामैर्दहेद्दोषान् प्रत्याहारेण पातकम् ।
धारणाभिश्च दुःखानि ध्यानेनानीश्वरान्गुणान् ॥२०॥
यथा पर्वतधातूनां ध्मातानां दह्यते मलम् ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ २१ ॥
वश्यं कर्तुं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी छन्देन प्राणं(१) नयति साधितम्(२) ॥२२ ॥
यथा हि साधितः सिंहो मृगान्हन्ति न मानवान् ।
तथा हि साधितः(३) प्राणः(४) किल्बिषं न नृणां तनुम् २३
प्राणायामं विना योगं साधयेद्यस्तु मन्दधीः ।
न स सैद्धीं(५) गतिं याति पङ्ग्वोजिगतिं यथा ॥ २४ ॥

(१) प्राणान् इति पाठा० ॥
(२) साधितुम् इति पाठा० ॥
(३) साधिताः इति पाठा० ॥
(४) प्राणाः इति पाठा० ॥
(५) सिद्ध इति पाठा० ॥

तस्मात्तु साधनं कुर्य्यात् प्राणायामस्य योगवित् ।
प्राणापाननिरोधश्च प्राणायामः प्रकीर्त्तितः ॥ २५ ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ २६ ॥
चक्षुःस्पन्दनमात्रस्य यावद् द्वादशसंज्ञिकाः ।
तावन्निरुध्यते प्राणः प्राणायामः स एव हि(१) ॥२७॥
स्वजानुनः(२) करावर्त्तं यावद् द्वादश छोटिकाः ।
तावन्नि(३)रुध्यते प्राणः प्राणायामः स कीर्त्तितः ॥२८॥
प्राणायामो लघुस्त्वेको द्विगुणो मध्यमः स्मृतः ।
उत्तमस्त्रिगुणो ज्ञेय इत्येषा वैदिकी स्मृतिः(४) ॥२९॥
प्रथमेन जयेत्स्वेदं द्वितीयेन च वेपथुम् ।
विषादं हि(५) तृतीयेन जयेद्दोषाननुक्रमात् ॥३०॥
द्विगुणोत्तरया वृद्ध्या प्रत्याहारस्तु धारणा ।
ध्यानं समाधिरित्येव प्राणायामादनुक्रमात् ॥३१॥
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
श्रूयतां मुक्तिफलदं तस्यावस्थाचतुष्टयम् ॥ ३२ ॥
ध्वस्तिः प्राप्तिस्तथा संवित् प्रसादश्च महामते ।
स्वरूपं शृणु चैतेषां कथ्यमानमनुक्रमात् ॥ ३३ ॥

(१) उच्यते इति पाठा० ॥
(२) स्वजानुतः इति पाठा० ॥
(३) यावन्नि इति पाठा० ॥
(४) स्थितिः इति पाठा० ॥
(५) च इति पाठा० ॥

कर्म्मणामिष्टदुष्टानां जायते फलसङ्क्षयः ।
चेतसोऽर्थकषायत्वाद्यत्र सा ध्वस्तिरुच्यते ॥३४॥

ऐहिकामुष्मिकान्कामान् लोभमोहात्मकांश्च यान् ।
निरुध्यास्ते यदा(१) योगी प्राप्तिः सा सर्व(२) कामिकी॥३५॥

अतीतानागतानर्थान् विप्रकृष्टतिरोहितान् ।
विजानाति यदा योगी तदा संविदिति स्मृता ।

यान्ति प्रसादं येनास्य मनः पञ्च च वायवः ।
इन्द्रियाणीन्द्रियार्थाश्च स प्रसाद इति स्मृतः ॥३६॥

प्राणायामस्य युक्तिस्तु पूर्वाभ्यासस्य कथ्यते ।
यां चक्रुर्मुनयः सर्वे नाडीसंशुद्धिहेतवे ॥ ३७ ॥

पूर्वं दक्षिणहस्तस्य स्वाङ्गुष्ठेनैव पिङ्गलाम् ।
निरुध्य पूरयेद्वायुमिड़या तु शनैः सुधीः ॥ ३८ ॥

यथाशक्तिनिरोधेन ततः कुर्याच्च कुम्भकम् ।
पुनस्त्यजेत्पिङ्गलया शनै रेचनकं ततः(३) ॥३९॥

पुनः पिङ्गलयापूर्य(४) पूरयेदुदरं शनैः ।
धारयित्वा यथाशक्त्या रेचयेदिड़या शनैः ॥४०॥

(१) सदा इति पाठा० ॥

(२) स्यात्सार्व इति पाठा० ॥

(३) मतम् इति पाठा० ॥

(४) पूर्वम् इति पाठा० ॥

(१)

## अथ प्रत्याहारः ॥

शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ ४२ ॥

स बाह्याभ्यन्तरं शौचं निष्पाद्याकण्ठनाभितः ।
पूरयित्वा बुधः प्राणैः(२) प्रत्याहारमुपक्रमेत् ॥

रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा ।
संछाद्य निर्म्मले सत्त्वे स्थितो युञ्जीत योगवित् ॥४४॥

इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन्मन एव च ।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥ ४५ ॥

यस्तु प्रत्याहरेत् कामन्(३) सर्वाङ्गानीव कच्छपः ।
स त्वात्मरतिरेकस्थः पश्यत्यात्मानमात्मना ॥ ४६ ॥

इति प्रत्याहारः (४) ॥

(१) यथा त्यजेत्तथा पूर्वन्धारयेदनिरोधतः ।
नाडीविशुद्धौ जातायां ततः कुर्याद्यथेच्छया ॥
इत्यधिकः श्लोकः पि० पु० अस्ति ॥

(२) प्राणौ इति पाठ० ॥

(३) कामान् इति पाठ० ॥

(४) पि० पु० इति प्रत्याहारः इति नास्ति ।

## अथ धारणा ॥

प्राणायामा दशाष्टौ(१) च धारणा साभिधीयते ।
द्वे धारणे स्मृते योगे(२) मुनिभिस्तत्त्वदर्शिभिः ॥ ४७ ॥
आधारजन्मभूनाभि(३)हृत्कण्ठास्तालु(४)नासिके ।
भ्रूमध्यो(५) मस्तके द्वारं(६) दशस्थानेषु धारणा ॥४८॥
गुरूपदेशमासाद्य एकस्मिन् स्थानके यदि ।
रुध्येते यन्मनोवातौ धारणा साभिधीयते ॥ ४९ ॥
जितां जितां शनैर्भूमिमारोहेत यथाक्रमम् ।
दोषान् व्याधींस्तथा मोहमादत्ते भूरनिर्ज्जिता ॥५० ॥

इति धारणा (७)॥

## अथ ध्यानम् ॥

शून्येषु चावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ ५१ ॥
त्यक्तसङ्गो जितमना लघ्वाहारो जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् (८) ॥५२॥

(१) दश द्वौ इति पाठा० ॥
(२) स्मृतौ योगौ इति पाठ.० ॥
(३) भूतानि इति पाठा० ॥
(४) हृत्कण्ठस्तालु इति पाठा० ॥
(५) भ्रूमध्ये इति पाठा० ॥
(६) मस्तकद्वारं इति पाठा० ॥
(७) पि०पु० इति धारणा इति नास्ति ॥
(८) नियोजयेत् इति पाठा० ॥

आत्मानं च जगत्सर्व्वं दृशा नित्याविभिन्नया ।
चिदाकाशमयं ध्यायन् योगी याति परां गतिम् ॥५३॥
अथवा प्रोच्यते ध्यानमन्यदेवात्र योगिनाम् ।
रहस्यं परमं मुक्तेः कारणं प्रथमं च यत् ॥ ५४ ॥
वायुवच्चञ्चलं चित्तं स्थिरीकर्त्तुं न शक्यते ।
तदर्थं सकले योज्यं तस्माद्भवति निश्चलम्(१) ॥५५॥
मूलाधारस्थितं जीवं प्रदीपकलिकाकृतिम् ।
प्रणवेन समाकृष्य दशमान्ते निवेशयेत् ॥ ५६ ॥
ततो जपेच्च प्रणवं मूलाधारात्समुत्थितम् ।
निर्यातं(२) दशमद्वारे मनसा दानरूपिणम् ५७ ॥
यथा प्रयुक्त ओंकारः प्रतिनिर्याति मूर्द्धनि ।
तथोंकारमयो योगी अक्षरे त्वक्षरो भवेत् ॥ ५८ ॥
कुर्व्वन्नेवं यदा पश्येन्मनोनेत्रेण योगवान् (३) ।
हंसं विन्दु(४)शिखां ज्योतिस्ततो(५) लयमवाप्नुयात् ॥५९॥
ब्रह्मद्वारे मुखे(६) सूक्ष्मं निर्व्विकल्पं परावरम् ।
परमं ज्योतिरासाद्य योगी तन्मयतां व्रजेत् ॥ ६० ॥

(१) निष्कलम् इति पाठा० ॥
(२) नियतिं इति पाठा० ॥
(३) योगवित् इति पाठा० ॥
(४) विन्दुं इति पाठा० ॥
(५) ज्योतिस्ततो इति पाठा० ॥
(६) ब्रह्मद्वारमुखे इति पाठा० ॥

निर्विकल्प(१)पदे प्राप्ते जीवे तल्लयतां गते ।
नश्यन्ति सर्व्वकर्म्माणि तस्मिन् दृष्टे परावरे ॥ ६१ ॥

वृक्षमूर्द्धिन यथा पक्षी अकस्मादेव दृश्यते ।
बुद्धिस्थो दृश्यतामेति झगित्येव तथा विभुः ॥ ६२ ॥

अग्रतः पृष्ठतो मध्ये पार्श्वतोऽथ समन्ततः ।
विद्युच्चकितवद्भाति सूर्यकोटिसमप्रभः ॥ ६३ ॥

रतान्ते स्त्री यथात्मानं क्षणं काहं न बुध्यति(२) ।
रमणोऽपि न जानाति कोऽहं योगे तथा पुमान् ॥ ६४ ॥

शृणोत्याश्चर्यवत्कोऽपि कोऽप्याश्चर्यवदीक्षते ।
श्रुत्वा दृष्ट्वा तथाप्येनं सम्यग्वेद न कश्चन ॥ ६५ ॥

गुरुप्रसादतो लक्ष्यं लब्ध्वा यत्नात्समभ्यसेत् ।
अभ्यासाद् दृश्यते देवो ज्ञानदृष्ट्या महेश्वरः ॥ ६६ ॥

तेजः परं द्युतिमतां तमसः परस्ता-
दादित्यवर्णकनकाभमनल्परूपम् (३) ।
आत्मानमात्मनि गतः(४) प्रकृतेर्विभिन्न-
मानन्दमात्रमिति पश्यति यः स मुक्तः ॥ ६७ ॥

(१) निर्विकल्पे इति पाठा० ॥

(२) बुध्यते इति पाठा ॥

(३) दादित्यवर्णममलं कनकस्वरूपम् इति पाठा० ॥

(४) गतम् इति पाठा० ॥

यथा वेदे ॥

वेदाहमेनं(१) पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ ६८ ॥

नाभीहृदयनासाग्रभालभ्रूतालुदृष्टयः ।
मुखं कर्णौ शिरश्चेति ध्यानस्थानान्यकीर्त्तयन्॥६९॥

इति श्रीयोगशास्त्रे ॥

इति ध्यानम् (२)॥

## अथ समाधिः ॥

समाधिः समतावस्था जीवात्मपरमात्मनोः ।
निस्तरङ्गपदप्राप्तिः परमानन्दरूपिणी ॥ ७० ॥
निश्वासी श्वासयुक्तो(३) वा निस्पन्दोऽचललोचनः ।
शिवध्यायी सुलीनश्च स समाधिस्थ उच्यते ॥७१॥
न शृणोति यदा किंचिन्न पश्यति न जिघ्रति ।
न च स्पर्शं विजानाति स समाधिस्थ उच्यते ॥७२॥

इति समाधिः (४)॥

## अथ तुर्यातीतम् ॥

अत्यन्तशुद्धचिन्मात्रे परिणामश्चिराय यः ।
तुर्यातीतं पदं तत्स्यात्ततस्थो भूयो न शोचति ॥७३॥

(१) मेतं इति पाठा० ॥
(२) पि० पु० नाभी त्यारभ्य इति ध्यानम् इतिपर्यन्तं नास्ति ॥
(३) निःश्वासोच्छ्वासयुक्तो इति पाठा० ॥
(४) पि० पु० इति समाधिः इति ना० ॥

निद्रादौ जागरस्यान्ते यो भाव उपपद्यते ।
तद्भावभावितो(१) योगी मुक्तो भवति नान्यथा॥१४॥
य आकाशवदेकात्मा(२) सर्वभावगतोऽपि सन् ।
न भावरञ्जनामेति स महात्मा महेश्वरः ॥ १५ ॥
यथा जलं जलेनैक्यं निक्षिप्त(३)मुपगच्छति(४) ।
तथात्मा सत्यतामेति योगिनः परमात्मनः(५) ॥१६॥
ततो न जायते नैव वर्द्धते न विनश्यति ।
नापि क्षयमवाप्नोति परिणामं न गच्छति ॥ १७ ॥
छेदं क्लेदं तथा दाहं शोषं भूरादितो न चेत्(६) ।
भूतचक्रादवाप्नोति शब्दाद्यैर्ह्रियते(७) न च ॥ १८ ॥
इति तुर्यातीतम्(८) । एते पुराणेभ्यो न चेत्-
योगशास्त्रेभ्यश्च(९) ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे मार्कण्डेयादिसाधितो द्वितीयोऽष्टाङ्ग-हठयोगपरिच्छेदः ॥१०॥

(१) भावितो इति पाठा० ॥
(२) यथाकाशवदेकात्मा इति पाठा० ॥
(३) जलेनैक्यान्निक्षिप्त इति पाठा० ॥
(४) मुपगम्यते इति पाठा० ॥
(५) परमात्मना इति पाठा० ॥
(६) च इति पाठा० ॥
(७) ह्रियते इति पाठा० ॥
(८) पि० पु० इति तुर्यातीतम् इति ना० ॥
(९) पि० पु० एते पुराणेभ्यो योगशास्त्रेभ्यश्च इत्येवास्ति ॥

## अथ मनःस्थिरीकरणप्रभावः ॥

यदान्यत्र मनो याति ध्यायतो(१) योगिनस्तदा ।
तत्रैव हि लयं कुर्याच् शिवः सर्वगतो यतः ॥ १ ॥

युक्त्यानया भवेच्चेतश्छिन्नपक्षमचञ्चलम् ।
सर्व्वत्रैकं शिवं ज्ञात्वा निर्व्विकल्पं विधीयते ॥ २ ॥

कामक्रोधादयः सर्व्वे मतिरक्षाख्यहंकृतिः ।
गुणा विविधकर्म्माणि विलीयन्ते मनःक्षयात् ॥ ३ ॥

अमनस्तां(२) गते चित्ते जायते कर्म्मणां क्षयः ।
यथा चित्रपटे दग्धे दह्यते चित्रसञ्चयः ॥ ४ ॥

तक्रयोगाद्यथा क्षीरं काठिन्यमुपगच्छति ।
तथा जीवो मनःस्थैर्यात् परं ब्रह्माधिगच्छति । ५ ।

यथा हिमप्रभावेण जलं स्त्यानत्वमाप्नुयात् ।
तथा मनःस्थिरत्वेन जीवः शिवमयो भवेत् ॥ ६ ॥

शिवस्य शक्तिर्ज्जीवोऽस्ति जीवशक्तिर्मनः स्मृतम् ।
जीवं शिवं प्रापयितुं मन एव हि कारणम् ॥ ७ ॥

(१) ध्यायते इति पाठः ॥

(२) अमनस्कं इति पाठः ॥

जीवः शिवः शिवो जीवो नान्तरं शिवजीवयोः(१) ।
मनोलिप्तो भवेज्जीवो मनोमुक्तः(२) सदा शिवः ॥८॥
एते शार्ङ्गधरस्य ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे मनःस्थिरीकरणप्रभाव-परिच्छेदः ॥ ६ ॥

---

## अथ योगिमहिमा ॥

दोषोपसर्गचिकित्सासम्प्रधारणाष्टमहासिद्धिप्राप्तयः (३) ।

अलौल्यमारोग्यमनिष्ठुरत्वं
गन्धः शुभो मूत्रपुरीषमल्पम् ।
कान्तिः प्रसादः स्वरसौम्यता च
योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥ १ ॥
अनुरागं जनो याति परोक्षे गुणकीर्त्तनम् ।
न च बिभ्यति(४) सत्त्वानि सिद्धेर्लक्षणमुत्तमम् ॥ २ ॥
शीतोष्णादिभिरत्युग्रैर्यस्य बाधा न जायते ।
न भीतिमेति चान्येभ्यस्तस्य सिद्धिरुपस्थिता ॥ ३ ॥

इति योगिमहिमा ॥

---

(१) न भेदोऽस्त्यनयोः क्वचित् इति पाठ० ॥
(२) मनोयुक्तः इति पाठ० ॥
(३) पि० पु० दोषोप इत्यादि प्राप्तयः इत्यन्तन्नास्ति ॥
(४) न बिभ्यति च इति पाठ० ॥

## अथ दोषोपसर्गचिकित्सा ॥

प्रमादा(१) योगिनो दोषा यद्येते स्युश्चिकित्सितम् ।
तेषां नाशाय कर्तव्यं योगनीतिं निबोध मे ॥ ४ ॥
बाधिर्य्यं जड़ता लोपः स्मृतेर्मूकत्वमन्धता ।
ज्वरश्च जायते सद्यस्तद्वदज्ञानयोगिनः ॥ ५ ॥
स्निग्धां यवागूं नात्युष्णां चित्ते तत्रैव धारयेत् ।
तावद् गुल्मप्रशान्त्यर्थमुदावर्त्ते तथा विधिः(२) ॥६॥
यवागूं चापि पवने वायुग्रन्थ्युपरि क्षिपेत् ।
तद्वत्कम्पे महाशैलं स्थिरं मनसि धारयेत् ॥ ७ ॥
विघाते वचसो वाचं बाधिर्य्ये श्रवणेन्द्रियम् ।
तथैवाम्रं फलं ध्यायेत् तृषार्त्ते(३) रसनेन्द्रियम् ॥८॥
यस्मिन् यस्मिन् यदा देशे तस्मिंस्तदुपकारिणीम्(४) ।
धारयेद्धारणामुष्णे शीतां शीते विदाहिनीम् ॥ ९ ॥
काष्ठं(५) शिरसि संस्थाप्य तथा काष्ठेन(६) ताड़येत् ।
लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तेन जायते ॥१०॥
अमानुषं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ।
वाय्वग्निधारणा चैनं देहसंस्थं विनिर्द्दहेत् ॥ ११ ॥

(१) प्रमादाद् इति पाठा० ॥
(२) र्थं गुदावर्त्ते यथाविधि इति र्थमुदावर्त्ते तथोदरे इति च पाठा० ।
(३) तृषार्त्तो इति पाठा० ॥
(४) कारिणम् इति पाठा० ॥
(५) कीलं इति पाठा० ॥
(६) काष्ठं काष्ठेन इति पाठा० ॥

एवं सर्वात्मना कार्या रक्षा योगविदानिशम् ।
धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ॥ १२ ॥
प्रवृत्तिलक्षणाख्यानाद्योगिनो विस्मयात्तथा ।
विज्ञानं विलयं याति तस्माद्गेयाः प्रवृत्तयः ॥ १३ ॥
उपसर्गाः प्रवर्त्तन्ते दृष्टेऽप्यात्मनि(१) योगिनः ।
ये तांस्ते संप्रवक्ष्यामि समासेन निबोध मे ॥ १४ ॥
काम्याः क्रियास्तथा कामान्मानुषानभिवाञ्छति ।
स्त्रियो दानफलं विद्यामायुर्द्दैर्घ्यं धनं दिवम् ॥१५॥
देवत्वममरेशत्वं रसायनवयःक्रियाः ।
मरुत्प्रपतनं यज्ञं जलाग्न्यावेशनं तथा ॥ १६ ॥
चित्तमित्थं प्रवर्त्तद्भि(२) यत्नाद्योगी(३) निवर्त्तयेत् ।
ब्रह्मासङ्गि मनः कुर्व्वन्नुपसर्गात् प्रमुच्यते ॥ १७ ॥
उपसर्गैर्ज्जितैरेभिरुपसर्गास्ततः पुनः ।
योगिनः सम्प्रवर्त्तन्ते सात्त्वराजसतामसाः ॥ १८ ॥
प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथा परौ ।
पञ्चैते योगिनो योगे(४) विघ्नाय कटुकोदयाः ॥१९॥
वेदार्थशास्त्रकाव्यार्थो(५) विद्याः शिल्पान्यशेषतः ।
प्रभवन्ति यदस्येति प्रातिभे सति(६) योगिनः ॥२०॥

(१) ह्यात्मनि इति पाठा० ॥
(२) प्रवृत्तं हि इति पाठा० ॥
(३) त्वयाद्योगी इति पाठा० ॥
(४) योग इति पाठा ॥
(५) वाक्यार्थो इति काव्यार्थो इति च पाठा० ॥
(६) प्रातिभः स तु इति पाठा० ॥

शब्दार्थानखिलान्वक्ति शब्दं गृह्णाति चैव यत् ।
योजनानां सहस्रेभ्यः श्रावणः सोऽभिधीयते ॥२१॥

अष्टौ यदा तु दृश्यन्ते समन्ताद्देवयोनयः ।
उपसर्गं तमित्याहुस्तमुन्मत्तं विदुर्बुधाः(१) ॥ २२ ॥

भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः ।
समस्ताधारविभ्रंशाद् भ्रमः स परिकीर्त्तितः ॥ २३ ॥

आवर्त्त इव तोयस्य ज्ञातावर्त्तो(२) यदाकुलः ।
चित्तमाश्रु कृतावर्त्तमुपसर्गः स उच्यते ॥ २४ ॥

एभिर्न्नाशितयोगास्तु सकला देवयोनयः ।
उपसर्गैर्महाघोरैरावर्त्यन्ते(३) पुनः पुनः ॥ २५ ॥

प्रावृत्य कम्बलं शुक्लं(४) योगं तस्मान्मनोमयं ।
चिन्तयेत्परमं ब्रह्म कृत्वा तत्प्रवणं मनः ॥ २६ ॥

इति दोषोपसर्गचिकित्सा(५) ॥

## अथ सप्त धारणाः ॥

योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ।
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूर्ध्नि धारयेत् ॥

(१) हुईँवमुन्मत्तवत् बुधाः इति पाठा० ॥
(२) ज्ञानावर्त्तो इति पाठा० ॥
(३) रावर्त्तन्ते इति पाठा० ॥
(४) युक्त इति पाठा० ॥
(५) पि०पु० इति दोषोपसर्गचिकित्सा इति नास्ति ॥

धरित्रीं धारयेद्योगी ततः सौक्ष्म्यं प्रवर्त्तते ।
आत्मानं मन्यते चोर्वीं तद्गन्धं वि(१)जहाति सा(२)॥२७॥
तथैवाप्सु रसं सूक्ष्मं तद्वद्रूपं च तेजसि ।
स्पर्शं वायौ तथा तद्वद् बिभ्रतस्तस्य धारणाः ॥२८॥
व्योम्नि सूक्ष्मप्रवृत्तेश्च शब्दं तद्वज्जहाति सः ।
मनसा सर्वभूतानां मनश्चाविशते यदा ।
मानसीं धारणां बिभ्रन्मनःसौक्ष्म्यं च जायते ॥२९॥
तद्वद् बुद्धिमशेषाणां सत्वानामतन्य योगवित् ।
परित्यजति संप्राप्य बुद्धिसौक्ष्म्यमनुत्तमम् ॥ ३० ॥
यस्मिन्यस्मिंस्तु कुरुते भूते रागं महामते(३)।
तस्मिंस्तस्मिन्समासक्तिं संप्राप्य स विनश्यति ॥३१॥
तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परस्परं ।
परित्यजति यो योगी(४) स परं प्राप्नुयात्पदम्॥३२॥
एतान्येव तु बन्धाय सप्त सूक्ष्माणि सर्व्वदा ।
भूरादीनां विरागोऽत्र संभवेद्यस्य(५) मुक्तये ॥ ३३ ॥
गन्धादिषु समासक्तमित्येतदखिलं जगत् ।
पुनरावर्त्तते सौख्यात् स ब्रह्मापर(६)मानुषम् ॥ ३४ ॥

(१) च इति पाठा० ॥
(२) सः इति पाठा० ॥
(३) महीपते इति पाठा० ॥
(४) देही इति पाठा० ॥
(५) यस्तु इति पाठा० ॥
(६) मर इति पाठा० ॥

सप्तैता धारणा योगी समतीत्य यदीच्छति ।
तस्मिंस्तस्मिंस्तदा भूते लयं याति विधानतः ॥३५॥

देवानामसुराणां च गन्धर्वोरगरक्षसां ।
देहेषु लयमायाति सङ्गं नाप्नोति च(१) क्वचित् ॥३६॥

इति सप्त धारणाः(२) ॥

## अथाष्टमहासिद्धिप्राप्तिः ॥

अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यं च तथेशित्वं वशित्वं च तथापरम् ॥३७॥

यत्र कामावसायित्वं गुणानेतांस्तथैश्वरान्(३) ।
प्राप्नोत्यष्टावनायासात्परनिर्वाण(४)सूचकान् ॥ ३८ ॥

सूक्ष्मात्सूक्ष्मतरोऽणीयान् शीघ्रत्वाल्लघिमा गुणः ।
महिमाशेषपूज्यत्वात्प्राप्तिर्नाप्राप्यमस्य यत् ॥ ३९ ॥

प्राकाम्यमस्य व्यापित्वादीशित्वं चेश्वरो यतः ।
वशित्वाद्वशिता नाम योगिनः सप्तमो गुणः ॥ ४० ॥

(१) सङ्गमाप्नोति न इति पाठा० ॥

(२) पि२० पु० इति सप्त धारणाः इति ना० ॥

(३) तथेतरान् इति पाठा० ॥

(४) परं निर्वाण इति परनिर्वाण इति च पाठा० ॥

यत्रेच्छा(१) स्थानमप्युक्तं यत्र कामावसायिता ।
ऐश्वर्यं(२) कारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥ ४१ ॥
एते मार्कण्डेयपुराणात् । इत्यष्ट महासिद्धयः (३) ॥

इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे योगिमहिमदोषोपसर्गचिकित्सासप्तधारणाष्टमहासिद्धिप्राप्तिपरिच्छेदः ॥ १४ ॥

---

## अथ योगिचर्या ॥

वाग्दण्डः कर्म्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी निगद्यते ॥१॥
या निशा सर्वभूतानां(४) तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥२॥
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र सोऽयं गृहो(५) यश्च तं देवा योगिनं विदुः ॥३॥
मानापमानौ यावेतौ प्रीत्युद्वेगकरौ नृणां ।
तावेव विपरीतार्थौ योगिनः सिद्धिकारकौ ॥४॥

---

(१) यत्रास्य इति पाठः ॥
(२) ऐश्वर्य इति पाठ० ॥
(३) पि० पु० इत्यष्ट महासिद्धयः इति नास्ति० ॥
(४) सर्वजन्तूनां इति पाठः ॥
(५) यत्र सायंगृहो इति पाठ० ॥

चक्षुःपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत्(१) ।
सत्यपूतं वदेद्वाक्यं(२) बुद्धिपूतं विचिन्तयेत् ॥५॥
सर्वसङ्गविहीनश्च सर्व्वपापविवर्ज्जितः ।
जडवन्मूकवद्योगी विचरेत महीतलम् ॥६॥
असिधारां विषं वह्निं समत्वे यः प्रपश्यति ।
मालासुधातुषाराणां स योगी कथ्यते बुधैः ॥७॥
यस्मिन्स्थाने क्षणं तिष्ठेदीदृग्योगी कथञ्चन ।
आयोजनं चतुर्द्दिक्षु पवित्रं तत्प्रचक्षते ॥ ८ ॥
चतुःसागरपर्यन्तां पृथिवीं यो ददाति च ।
तत्त्वज्ञस्य च यो भिक्षां समां वा नाथ वा समाम् ॥९॥
आतिथ्ये श्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजने च सिद्धार्थी(३) न गच्छेद्योगवित्क्वचित् ॥१०॥
जाते(४) विधूमे चाङ्गारे(५) सर्वस्मिन्भुक्तवज्जने ।
अटेत योगविद्भैक्ष्यं(६) न तु तेष्वेव नित्यशः ॥ ११ ॥
यथैनमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तं च(७)रेद्योगी सतां धर्म्मसदूषयन् ॥ १२ ॥

(१) पिबेज्जलम् इति पाठा० ॥
(२) सत्यपूतां वदेद्वाणीं इति पाठा० ॥
(३) सिद्धयर्थं इति पाठा० ॥
(४) व्यस्ते इति पाठा० ॥
(५) व्यङ्गारे इति पाठा० ॥
(६) भैक्षं इति पाठा० ॥
(७) युक्तश्च इति पाठा० ॥

भैक्ष्यं(१) गृह्णन् गृहस्थेषु श्रोत्रियेषु चरेद्यतिः ।
फलमूलं यवाग्वन्नं पयस्तक्रं च शक्तवः(२) ॥ १३ ॥
ब्रह्मचर्यमलोभश्च दयाक्रोधः सुचिन्तिता(३) ।
आहारलाघवं शौचं योगिनां नियमाः स्मृताः॥१४॥
सारभूतमुपासीत ज्ञानं तत्कार्यसाधनम् ।
ज्ञानानां बहुता येयं योगविघ्नकरी हि सा ॥ १५ ॥
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
अपि कल्पसहस्रेषु नैव ज्ञेयमवाप्नुयात् ॥ १६ ॥

समाहितो ब्रह्मपरोऽप्रमादी
तथैव चै(४)कान्तरतिर्जितेन्द्रियः ।
विशुद्धबुद्धिः समलोष्टकाञ्चनः
प्राप्नोति योगी परमव्ययं पदम् ॥ १७ ॥

एते मार्कण्डेयपुराणात् ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे योगिचर्या- परिच्छेदः ॥७५॥

(१) भैक्ष्यं इति पाठा० ॥
(२) सक्तवः इति पाठा० ॥
(३) सुचित्तता इति पाठा० ॥
(४) बुधस्तथै इति पाठा ॥

## अथारिष्टज्ञानम् ॥

अक्षीणकर्म्मबन्धस्तु ज्ञात्वा मृत्युमुपस्थितम् ।
उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति ॥ १ ॥
तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ।
ज्ञेयान्यरिष्टानि सदा येनोत्क्रान्तौ न सीदति ॥२॥
अरिष्टानि विशिष्टानि शृणु वक्ष्यामि तेन(१) ते ।
येषामालोकनान्मृत्युं निजं जानाति योगवित् ॥३॥
देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीम् ।
यो न पश्येन्न जीवेत्स नरः संवत्सरात्परम् ॥ ४ ॥
अरश्मिविम्बं सूर्यस्य वह्निञ्चैवांशुमालिनम् ।
दृष्ट्वैकादश मासांस्तु(२) नरो नोर्ध्वं स जीवति ॥५॥
वान्त्या(३) मूत्रं पुरीषं यः सुवर्णं रजतं वमेत् ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥ ६ ॥
दृष्ट्वा प्रेतपिशाचादीन् गन्धर्व्वनगराणि च ।
सुवर्णवर्णान्वृक्षांश्च(४) नव मासान्स जीवति ॥ ७ ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्तेत तस्यायुश्चाष्टमासिकम् ॥ ८ ॥

(१) तानि इति पाठा० ॥
(२) मासांश्च इति पाठा० ॥
(३) वान्त्याम् इति पाठा० ॥
(४) सुवर्णवर्णवृक्षांश्च इति पाठा० ॥

खण्डं यस्य पदं पार्ष्ण्योः(१) पादस्याग्रेऽथ वा भवेत्।
पांशुकर्द्दममध्ये वा सप्त मासान्स जीवति ॥ ९ ॥
कपोतगृध्रकाकोलवायसो(२) वापि मूर्द्धनि ।
क्रव्यादो वा परो लीनः षण्मासायुःप्रदर्शकः ॥१०॥
हन्यते काकपङ्क्तीभिः(३) पांशुवर्षेण वा नरः ।
स्वच्छायां वा(४)न्यथा दृष्ट्वा चतुर्म्मासान्स जीवति॥११॥
अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रितम्(५) ।
पयसीन्द्र(६)धनुर्वापि जीवितं त्रिद्विमासिकम् ॥१२॥
घृते तैले तथादर्शे तोये वा नात्मनस्तनुम्(७) ।
यः पश्येदशिरस्कां च(८) मासादूर्ध्वं न जीवति॥१३॥
यस्य बस्तसमो गन्धो गात्रे शवसमोऽपि वा ।
तस्य मासार्द्धकं ज्ञेयं योगिनः किल जीवितम् ॥१४॥
यस्य वै स्नातमात्रस्य हृत्तोय(९)मवशुष्यति ।
पिबतः सलिलं(१०) शोषो दशाहं सोऽपि जीवति॥१५॥

(१) पार्ष्ण्याम् इति पाठा० ॥
(२) कपोतगृध्रकाकोलो वायसो इति कपोतगृध्रकाकोला वायसो इति च पाठान्तरम् ॥
(३) पङ्क्तीभिः इति पङ्क्तिभिः इति च पाठा० ॥
(४) च्चान्यथा इति पाठा० ॥
(५) माश्रितम् इति पाठा० ॥
(६) रात्राविन्द्र इति पाठा० ॥
(७) वाप्यात्मनस्तनुम् इति पाठा० ॥
(८) दशिरःस्कन्धां इति पाठा० ॥
(९) हृत्पाद इति पाठा० ॥
(१०) पिबतश्च जलं इति पाठा० ॥

(१)
पिधाय कर्णौ निर्घोषं(२) न शृणोत्यात्मसंभवम् ।
नश्यते चक्षुषोर्ज्ज्योतिर्यस्य सोऽपि न जीवति ॥१६॥
रक्तकृष्णाम्बरधरा गीतहास्यपरा च यम् ।
दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥१७॥
नग्नं क्षपणकं स्वप्ने हसन्तं नृत्यतत्परम् ।
एकं च वृद्धं वल्गन्तं(३) विद्यान्मृत्युमुपस्थितम् ॥१८॥
पततो यस्य वै गर्त्ते स्वप्ने द्वारं वि(४)धीयते ।
न चोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितम् ॥१९॥
स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥ २० ॥
करालैः पुरुषैः सूक्ष्मै(५)र्विकटैरुद्यतायुधैः ।
पाषाणैस्ताड़ितः स्वप्ने सद्योमृत्युर्भवेन्नरः ॥ २१ ॥
दीपादिगन्धं नो वेत्ति पश्यत्यग्निं तथा निशि ।
नात्मानं परनेत्रस्थं वीक्षते यः स मृत्युमान् ॥२२॥
स्वभाववैपरीत्ये तु(६) शरीरस्य विपर्यये ।

(१) यस्यापि हन्यते दृष्टिर्भूर्न रात्रावथो दिवा ।
स मृत्युं सप्तरात्रान्ते पुमान् प्राप्नोत्यसंशयम् ॥
इति श्लो० पि० पु० अधिको वर्त्त० ॥
(२) च निजौ इति पाठा० ॥
(३) एकं विलक्षं विभ्रान्तं इति पाठा० ॥
(४) पि इति पाठा० ॥
(५) कृष्णौ इति पाठा० ॥
(६) वैपरीत्येन इति पाठा० ॥

कथयन्ति मनुष्याणां समासन्नौ यमान्तकौ ॥ २३ ॥
आरक्ततामेति मुखं जिह्वा वाप्यसिता भवेत् ।
तदा प्राज्ञो विजानीयान् मृत्युमासन्नमागतम्(१)॥२४॥
नासिका वक्रतामेति कर्णयोर्नमनोन्नती ।
नेत्रं च वा सं(२)स्रवति यस्य तस्यायुरुद्गतम् ॥२५॥
योगिनां ज्ञानविदुषामन्येषां वा महात्मनाम् ।
प्राप्ते तु(३) काले पुरुषैस्तद्विचार्य्यं विचक्षणैः ॥२६॥
एते मार्कण्डेयपुराणात् ॥

## इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे अरिष्टज्ञान-परिच्छेदः ॥१६॥

---

## अथ विदेहमुक्तिकथनम् ॥ कालवञ्चने(४) ॥

पूर्वाह्ने वा(५) पराह्ने वा मध्याह्ने वा दिने(६) क्वचित् ।
यत्र वा रजनीभागे तदरिष्टं निरीक्षितम् ॥ १ ॥

(१) मासन्नः इति पाठा० ॥
(२) वामम् इति पाठा० ॥
(३) च इति पाठा० ॥
(४) पिट० पु० कालवञ्चने इति ना० ॥
(५) चा इति पाठा० ॥
(६) परे इति पाठा० ॥

अश्रुधाराकरोद्भूत(१)ममृतं तेन मूलतः ।
सिञ्चतीं(२) सकलं देहं प्लावयन्तीं विचिन्तयेत् ॥१६॥

तया सार्द्धं ततो योगी शिवेनैकात्मतां व्रजेत् ।
परानन्दमयो भूत्वा चिद्वृत्तिमपि संत्यजेत् ॥१७॥

ततोऽलक्ष(३)मनाभासमहंभावविवर्ज्जितम् ।
सर्व्वगं(४) कल्पनाहीनं कथं कालो निहन्ति तम् ॥१८॥

स एव कालः स शिवः स सर्वं नापि किंचन ।
कः केन हन्यते तत्र म्रियते नापि कश्चन ॥ १९ ॥

ततो व्यतीते समये कालस्य भ्रान्तिरूपिणि(५) ।
योगः(६) सुप्तोत्थित इव प्रबोधं याति बोधितः ॥२०॥

एवं सिद्धो भवेद्योगी वञ्चयित्वा विधानतः ।
कालं कलितसंसारं पौरुषेणाद्भुतेन हि ॥ २१ ॥

ततस्त्रिभुवने योगी विह(७)रत्येक एव सः ।
पश्यन्संसारवैचित्रीं(८) स्वेच्छया निरहंकृतिः ॥२२॥

(१) पीत्वा सुधाकराद्भूतं इति पाठा० ॥
(२) सिञ्चन्तीं इति पाठा० ॥
(३) लक्ष इति पाठा० ॥
(४) सर्वाङ्गः इति पाठा० ॥
(५) रूपिणः इति पाठा० ॥
(६) योगी इति पाठा० ॥
(७) विच इति पाठा० ॥
(८) वैचित्र्यं इति पाठा० ॥

तस्य भागे तथैवाह्रो योगं युञ्जीत योगवित् ।
विदेहमुक्तये ज्ञानी त्यक्त्वा मरणजं भयम् ॥ २ ॥

युग्मम् ॥

बद्धपद्मासनो धीमान् समसंस्थानकंधरः ।
निरुद्धप्राणपवनो दन्तैर्दन्तान्न संस्पृशेत् ॥ ३ ॥

बुद्ध्या निरुद्ध्य द्वाराणि न च(१) मीलितलोचनः ।
ओंकारं तु धनुः कृत्वा गुणं सत्त्वं नियोज्य च ॥४॥

तत्रात्मानं शरं सोऽपि वृतो भूतेन्द्रियादिभिः ।
प्राणवायुमनःक्षेपैः क्षिप्तो हृत्कमलस्थितः ॥ ५ ॥

दशमद्वारमार्गेण लक्ष्यं प्राप्य ततः परं ।
षट्त्रिंशत्तत्त्वसंयुक्तः परमात्मनि लीयते ॥ ६ ॥

चतुर्भिः(२) कलापकः(३) ।

ततः परममाकाशमतीन्द्रियमगोचरं ।
यद् बुद्धेनैव व्या(४)ख्यातुं शक्यते नस्त(५)मश्नुते॥७॥

इति विदेहमुक्तिकथनम्(६) ॥

(१) नव इति पाठा० ॥

(२) पि०पु० चतुर्भिः इति ना० ॥

(३) कलापकम् इति पाठा० ।

(४) यद् बुद्ध्या नैव या इति पाठा० ।

(५) ऽनन्त इति पाठा० ।

(६) पि० पु० इति विदेहमुक्तिकथनम् इति ना० ।

## अथ कालवञ्चना ॥

जीवन्मुक्तः सदेहोऽहं विचरामि जगत्त्रयम् ।
इति चेज्जायते वाञ्छा योगिनस्तन्निबोध मे ॥८॥
शरीरं न त्यजत्येव(१) कालः कस्यापि कुत्रचित् ।
अतः शरीररक्षार्थं यत्नः कार्यस्तु योगिना ॥ ९ ॥
योगिना सततं यत्नादरिष्टानां विचारणा ।
कर्त्तव्या येन कालोऽसौ ज्ञाते(२) हन्ति चञ्चलान्न तम् १०
ज्ञात्वा कालं च तं सम्यक् लयस्थानं समाश्रितः ।
युञ्जीत योगं कालोऽस्य यथासौ जायतेऽफलः ॥११॥
बद्धसिद्धासनो देहं पूरयेत्प्राणवायुना ।
कृत्वा दण्डं स्थिरं बुद्ध्या दश द्वाराणि रुन्धयेत् १२
बन्धयेत्खेचरीमुद्रां(३) ग्रीवायां च जलन्धरम् ।
अपाने मूलबन्धं च उड्डीयाणं तथोदरे ॥ १३ ॥
उत्थाप्य भुजगीं शक्तिं मूलोद्घाते(४)रधः स्थिताम् ।
सुषुम्ना(५)न्तर्गतां पञ्चवक्राणां भेदिनीं शिवाम् ॥१४॥
जीवं हृदाश्रयं नीत्वा यातीं(६) बुद्धिमनोयुताम् ।
सहस्रदलपद्मस्य(७)शिवे लीनां सुधामये ॥ १५ ॥

(१) नयत्येव इति पाठः ॥
(२) ज्ञातो इति पाठः ॥
(३) खेचरीयन्त्रं इति पाठः ॥
(४) मूलवाते इति पाठः ॥
(५) सुषुम्णा इति पाठः ॥
(६) यान्तीम् इति पाठः ॥
(७) पद्मस्थ इति पाठः ॥

यथार्क्करश्मिसंयोगादर्क्ककान्तो हुताशनम् ।
आविः करोति(१) नैरूः सन् दृष्टान्तः स तु योगिनः॥२३॥
मृद्देहिकाल्पदेहापि मुखाग्रेणात्यणीयसा ।
करोति मृद्भारचयमुपदेशः स योगिनः ॥ २४ ॥
पिङ्गला कुररः सर्प्पः सारङ्गान्वेषको वने ।
इषुकारः कुमारी च षडेते गुरवो मताः ॥२५॥
रुरुशावविषाणाग्रमालोक्य तिलकाकृतिम् ।
सह तेन विवर्द्धन्ते योगी सिद्धिमुपाश्नुते ॥ २६ ॥

इति योगिनां कालवञ्चना(२) ॥

(३)

इति विरचितबन्धा पद्धतिर्या मयेयं
सकलगुणिगणानां प्रीतये सास्तु नित्यम् ।
विपुलविमलदीव्यत्सत्कलानां निधानं
तरुणतरणितुल्या(४) विद्विषत्कौशिकानाम् ॥२७॥
क्षीराब्धेः कमलेव केशवपदाद्गङ्गेव साधोर्मुखात्
सद्वाणीव सुधाकरादिव सुधा भानोरिव ज्योतिता(५)।
माकन्दादिव मञ्जरी घनभरा(६)द्वर्षैव या निर्गता
सेयं शार्ङ्गधरात्तनोतु जगतश्चेतोमुदं पद्धतिः ॥२८॥

(१) आविष्करोति इति पाठः ॥
(२) पि० पु इति योगिनां कालवञ्चना इति ना० ॥
(३) पि० पु० अथ ग्रन्थप्रशंसा इत्यधि० वर्त्त० ॥
(४) रुद्धा इति पाठ० ॥
(५) रिवोद्द्योतिता इति पाठ० ॥
(६) जलधरा इति पाठ० ॥

अभ्यासात्स्याद्(१) ग्रन्थदर्प्पस्य(२) शिष्यः
सर्वज्ञः स्याद्विस्फुरच्चारुबुद्धिः ।
अर्थं कामं वेत्ति धर्म्मं च मोक्षं
निःसंदेहं शीलितुं पण्डितोऽपि ॥ २९ ॥

शास्त्राब्धिं सकलं विलोड्य नितरां ग्रन्थः कृतोऽयं मया
लोकानन्दकरः समस्तसुकलासन्तानजैवातृकः ।
अस्यास्वाद्य सुभाषितामृतरसानानन्दपूर्णान्तराः
सन्तः सम्प्रति नाकवासनिरतान्देवान् हसन्तु ध्रुवम् ३०॥

इति शार्ङ्गधरविरचितायां पद्धत्यां शान्तरसे
विदेहमुक्तिकथनकालवञ्चनादि-
परिच्छेदः(३) ॥ १७ ॥

(१) अस्याभ्यासाद् इति पाठा० ।

(२) ग्रन्थवर्यस्य इति पाठा० ॥

(३) पिट० पु० क्वापि परिच्छेदोल्लेखो नास्ति। समाप्तौ तु इति शार्ङ्गधरपद्धतिः समाप्ता इत्येवास्ति ॥

